C 8 336 / B 8 9 69 / K 8 6 87

वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः ॥ १०२
के कर्णं वाजहुः शूराः के क्षुद्राः प्राद्रवन्भयात् ।
कथं च वः समेतानां हतः कर्णो महारथः ॥ १०३
पाण्डवाश्च कथं शूराः प्रत्युदीयुर्महारथम् ।
सृजन्तं शरवर्षाणि वारिधारा इवाम्बुदम् ॥ १०४
स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा ।
व्यर्थः कथं समभवत्तन्ममाचक्ष्व संजय ॥ १०५
मामकस्यास्य सैन्यस्य हृतोत्सेधस्य संजय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १०६
तौ हि वीरौ महेष्वासौ मदर्थे कुरुसत्तमौ ।
भीष्मद्रोणौ हतौ श्रुत्वा को न्वर्थो जीवितेन मे ॥१०७
न मृष्यामि च राधेयं हतमाहवशोभिनम् ।

---

(for सयुगे) — c) B2 Dn1 D4 वामचक्र — d) Ś2 वीर्यस्य (for वीरस्य) B4 धीमत (for पृष्ठत). K1 ररक्षुस्तस्य पृष्ठत, D8 सूतपुत्रस्य धीमत, S के चा(T3 वा)सन्नस्य पृष्ठत

103 a) K3 V1 Dn1 नाजहु, B Da1 D1-5 7 8 T1 3 G1 2 M न जहु, T2 विजहु; G3 निजहु K4 Da1 D1 5 6 T2 वीरा (for शूरा) — B2 om (hapl) $103^{b}$-$104^{a}$. K3 reads $103^{b}$-$104^{a}$ twice — b) K2 को (for के) K3 D4 M1 क्षुद्रा K1 प्रादुर्भव (sic), V1 D6 प्राजहुर्, B1 राजभूर्, D1 प्राद्रवस्, D7 प्राद्रवस्, M1 प्राद्रवद् (for प्राद्रवन्) B3 तया, B4 5 Da1 D1 3-5 7 तत, D6 भयान् (for भयात्) — c) D6 वत, T2 -चन (for च व) B1 कथं व सममेताना (sic) — d) K1 हतश्चेतो (for हत कर्णो)

104 B2 om $104^{a}$ (of v l. 103) K3 repeats $104^{a}$ (of v l 103) — a) T3 G1 3 पार्थवांश्च (for पाण्डवाश्च) V1 G1 हत, G3 महा, Bom. ed. स्वय (for कथं) D8 वीरा (for शूरा) — b) B3 प्रत्युपयुर्, T1 प्रात्युदीय्यन् (for प्रत्युदीयुर्) B1-3 5 D2-4 6 7 S महारथा (for महारथम्) — c) K1 स्वजतं, K3 V1 B2 3 5 Da1 D1-7 S सृजत (D6 °त) (for सृजन्तं) B3 शरजालानि — d) K3 V1 B1-3 5 Da1 D1-7 S इवाम्बुदा, Dn1 इवाम्बुद (for इवाम्बुदम्)

105 a) K3 शर-, D2 6 शर, D8 (marg) ते च (for स च) D2 सर्पमुपो, D8 सर्पमुखा, G2 सर्वमुखो; G3 सर्पवरो (for सर्पमुखो) Da1 D1 5 वीर, D8 दिव्या (for दिव्यो) — T1 om. $105^{bcd}$ — b) Dn1 मयेषु, M2-4 महेषु D8 -प्रवरास् (for -प्रवरस्) K3 V1 B3 D2 6 तथा (for तदा) — c) B3 T2 G1 2 व्यर्थं, D8 व्यर्था (for व्यर्थ) D8 समभवन् (for समभवत्) — d) T2 सयुगे (for सजय)

106 Ś2 om. 106-109 K4 V1 B D (except D2 6 8) S read 106-108 (for the first time) after the ref in 8 4 88 T1 om (second time) $106^{a}$-$107^{b}$, T2 G1 (both first time) om 106 — a) D5 (second time) सामकस्य (for माम°) — b) Ś1 K2 4 V1 B1 Dn1 D2 6 (all second time) T1 2 G2 3 M1 (all first time) 2 (second time) 3 (both times) 4 (second time) हृतोत्सेध(G2 first time *sup lin* °न)स्य, K4 B5 (both first time) कृतोत्सेकस्य, V1 (first time) ***कस्य; B1-4 D3 4 7 (all first time) कृतोत्सेधस्य, B5 Da1 D1 5 (all second time) कृतोत्साहस्य, Dn1 (first time) हतशेषस्य, D5 (second time) हतोच्छेषस्य, T2 G1 (both second time) हतोत्साहस्य, T3 (second time) हृतो-त्साहस्य, Ca c कृतोत्सवस्य (for हृतोत्सेधस्य) G1 (second time) सजय — c) Ś1 K1. 2 4 (second time) अविनष्टं, K3 Dn1 D2 4 6 8 (all second time) अवशिष्ट, V1 (second time) हताशस्तन्, B1 (second time) हतशिष्ट, G3 (second time) अविशेष (for अवशेष) — d) K1 (second time) ककुद्गो, Ca (both times) c (second time) ककुदे (as in text) D5 (second time) transp ककुदे and मृदिते B2 (first time) समुद्दि, Da1 (both times) D1. 5 (both second time) सूदिते; D1 6 (both first time) निहते, G1 (second time) मृदितो (for मृदिते) T3 G M (all second time) युधि (for सति) T2 (first time) कर्णे विनिहते सति — For the sequence and repetition of 8 4 $88^{c}$-$89^{b}$ after 8 5. 106 (first time) in K4, cf. v l. 8 4 88

107 Ś2 om 107, T1 om $107^{ab}$ (cf v l 106). — a) K4 (first time) तौ वीरौ च, T1 (first time) ततौ वीरौ, M2-4 (all first time) तौ नृवीरौ (for तौ हि वीरौ) — b) K4 V1 B D4 7 (all first time) मदर्थं; D8 (first time) मदर्थे-, G3 (first time) मदस- (corrupt). Ś1 K2-4 V1 B D S (all second time) त्यक्तजीवि(Dn1 °व)तौ, T1 (first time) वीरसत्तमौ (for कुरु°) K1 (second time) मदर्थेत्यक्तजीवितौ — c) K1 (second time) भीष्मद्रोणो, D5 (second time) °द्रोणै — d) K1 (first time) Da1 (second time) को न्वर्थे, Dn1 (first time) नार्थो वै, G2 (second time) को न्वर्थौ (for को न्वर्थो). K3 B1 D2 (all second time) जीवितस्य मे; V1 B (B3 m as in text) Da1 D1 3-5 7 (all first time)

यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ १०८
द्रोणे हते च यद्वृत्तं कौरवाणां परैः सह ।
संग्रामे नरवीराणां तन्ममाचक्ष्व संजय ॥ १०९
यथा च कर्णः कौन्तेयैः सह युद्धमयोजयत् ।
यथा च द्विषतां हन्ता रणे शान्तस्तदुच्यताम् ॥ ११०

इति श्रीमहाभारते कर्णपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## ६

संजय उवाच ।
हते द्रोणे महेष्वासे तस्मिन्नहनि भारत ।
कृते च मोघसंकल्पे द्रोणपुत्रे महारथे ॥ १
द्रवमाणे महाराज कौरवाणां बले तथा । C 8 343 B 8 10 2 K 8 7 2

---

जीविते सति, T1 (first time) जीविते मम, M1 (second time) जीवितो न मे, M1 (second time) चिन्तितेन मे (for जीवितेन मे)

108 Ś1 om. 108 (cf v 1. 106) — a) B1 (first time) न मृष्यामि, Dn1 (first time) न च शोचामि, T2 (first time) न च मृष्यामि (for न मृष्यामि च) All MSS (Ś1 om., K4 V1 B Da1 Dn1 D1. 2–5 7 S second time) पुन पुनर्न मृष्यामि (K1 °नर्न इष्यामि, K2 °नस्तृप्यामि, B1 Dn1 °नर्नमिष्यामि, D2 °नर्न मृष्यामि), K1 (first time) न मृष्यामि न राधेय — b) All MSS (Ś1 om., K1 V1 B Da1 Dn1 D1 2–5 7 S second time) हत (S वध) कर्णं च (V1 B1 Dn1 D1 5 °र्णं स्म, D2 S °र्णस्य) पार्श्वे (G1 पार्थिवे) — c) G2 (first time) अस्य (for यस्य) Ś1 K2 (both second time) बाहुबलं, V1 (second time) B1 (both times) बाह्वोर्यन् Ś1 K2 3 D2 2 (all second time) पूर्णं, D. (second time) पूर्वं (for तुल्य) — d) Ś1 K3 (both second time) मम शतं, K1 2 V1 B3–4 Da1 D1. 2 4 7 3 (all second time) T2 G2 M1. 2 (all both times) 3 (first time) 4 (both times) शत शतं, K4 (second time) शाम शतं, B2 (first time) T1 2 G1 (all both times) 2 (first time) शतं शतं, Dn1 (first time) शत शत; Dn1 D. (second time) शत शतं, D3 (second time) शतं शत, D2 T1 2 G1 (second time) M2 (second time) शत शतं; C3 c शत शतम् (as in text)

109 Ś1 om 109 (cf v 1 106) — a) V1 B1 transp द्रोणे and हते

110 a) K1 तथा (for यथा) V1 ह (for च) K1 B1 च कर्णं, B2 D3 4 7 कर्णश्च, B3–5 Da1 D1 5 कर्णेन, D2 M1 च कर्णं (for च कर्णं) K3 कौंतेयो, K4 Da1 Dn1 D1 2 6 कौंतेय, V1 D3 कौंतेय, B3–5 कौंतेया (for कौन्तेयैः) — b) B1 5 T1 अयोधयत, B3 अयोजयन्, B4 D5 अयोधयन् (for अयोजयत्). — In Ś1, 110cd is lost on a damaged fol. — c) K4 B4 D2 T2 M2 तथा (for यथा). K3 T2 G वा, B2 स, (for च) B2 विद्विषतां (for च द्वि°) K1 हतां (for हन्ता) — d) T1 हते युद्धे, T2 G M हतो युद्धे (for रणे शान्तस्)

Colophon — *Adhy name* Dn1 धृतराष्ट्रवाक्य, T1. 2 M1 धृतराष्ट्रप्रश्न; G1 धृतराष्ट्रस्य जल्पनं; G3 धृतराष्ट्रजल्पनं — *Adhy no* (figures, words or both) Ś1 B1. 2 5 Da1 D1. 6 2 9, D1 10, T1 2 G M 6, T2 8.

## 6

☞ In Ś1, st 1–6 are lost on a damaged fol. The variants are noted wherever legible

1 Before the ref., G2 ins श्रीकृष्णाय नम — a) T3 G2 3 तस्मिन्, Ca द्रोणे (as in text) — c) M1 कृपे च (for कृते च) B1 कृपे चामोघसंकल्पे

2 a) Ś1 K2 द्रवमाने, B1 M1 °माण, Dn1 D6 3 T1. 2 G2 3 M2–4 °माणा, D5 द्रावमाणे; T3 विद्रावयन्, G1 भ्रामयित्वा (for द्रवमाणे) G1 महाराजा, G2 तदा दृष्ट्वा (for महाराज) — b) T3 पौरवाणा (for कौरवाणां) V1 B1 Dn1 D2 6 2 S अनीकिनीं, B2–5 Da1 D1. 3–5 7 बलार्णवे (for बले तथा) K3 तदा (for तथा) — c) K1 T1 G1 व्यूह (for व्यूह्य) B3 पार्था°, D6 T1 G1 पार्थं (for पार्थ°)

C 8 245 B 6 10 2 K 8 7 2 व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिः सह ॥ २

तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ ।
द्रवच्च स्वबलं दृष्ट्वा पौरुषेण न्यवारयत् ॥ ३

स्वमनीकमवस्थाप्य बाहुवीर्ये व्यवस्थितः ।
युद्ध्वा च सुचिरं कालं पाण्डवैः सह भारत ॥ ४

लब्धलक्षैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा ।
संध्याकालं समासाद्य प्रत्याहारमकारयत् ॥ ५

कृत्वावहारं सैन्यानां प्रविश्य शिबिरं स्वकम् ।
कुरवोऽऽत्महितं मन्त्रं मन्त्रयांचक्रिरे तदा ॥ ६

पर्यङ्केषु परार्ध्येषु स्पर्ध्यास्तरणवत्सु च ।
वरासनेषूपविष्टाः सुखशय्यास्विवामराः ॥ ७

ततो दुर्योधनो राजा साम्ना परमवल्गुना ।
तानाभाष्य महेष्वासान्प्राप्तकालमभाषत ॥ ८

मतिं मतिमतां श्रेष्ठाः सर्वे प्रब्रूत माचिरम् ।
एवं गते तु यत्कार्यं भवेत्कार्यकरं नृपाः ॥ ९

एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः ।

---

D8 स्वयं, G3 सुखं (for स्वकं) — d) B8 अतिष्ठन् (for अतिष्ठद्) Da1 D3 4 7 वृत (for सह)

3 b) Dn1 भरतर्षभ — After $3^{ab}$, G2 reads (for the first time) 5, repeating it in its proper place — c) B2-4 Da1 D1 3-5 7 विद्रुतं, B5 प्रद्रुत (for द्रवच्च) Ś1 K2 स्वं बल, D8 तद्बलं (for स्वबल) Dn1 S द्रवमाणं बल दृष्ट्वा — d) K3 व्यधारयत्, K4 निवारयत् (for न्यवारयत्).

4 b) K3 बाहुवीर्यव्यवस्थित, V1 B1.2 Da1 D6 T G1 2 M °वीर्यमुपाश्रित, B3 °वीर्यसमाश्रित, B4 5 D1 3-5 7 G3 °वीर्यमपाश्रित, Dn1 D2 8 °वीर्यमवस्थित — c) Dn1 D6 युद्धाय, D1 युधा च; S संयुध्य (for युद्ध्वा च) K4 स चिर (for सुचिर) — d) B5 भारत (for भारत)

5 G2 reads 5 (for the first time) after $3^{ab}$. — a) K3 4 लब्धलक्ष्यै, (for लब्धलक्षै) K3 हर्षै, B2 हस्तै (for हृष्टै) — b) K3 व्यायच्छद्भिश्च, D8 व्ययच्छ°; G2 (both times) दारयद्भिश्च; M1 (*sup lin* as in text) व्यायच्छती, Co व्यायच्छद्भिश् (as in text) B3 शरास् (for चिर) B3 T G2 (both times) M तथा (for तदा) — c) M2-4 समास्थाय (for समासाद्य) — d) B1 प्रत्यहारम् (for प्रत्याहारम्) — After 5, S ins

62* निवेश्य च बल घोर क्षुत्पिपासाभयैर्युतम् ।
श्रमेण महता युक्त तथा द्रोणवधेन च ।
दीनरूपा रणे कृत्वा कर्म घोरा च शर्वरीम् ।
निवेश प्राप्य सा सेना विश्रम्य मुदिताभवत् ।

[(L 1) M2-4 न्यवेशयद्बल घोरं, Mad ed. निवेश्य बलवद्घोरं T1 °पिपासाभलैर् — G1 om lines 3-4. — (L 3) T2 दीनरूप, T3 दीनरूपाद् G3 घोरं (for घोरां) — (L. 4) M1 विश्राम्य ]

6 G1 om $6^{ab}$ — a) K4 कृत्वावराह, T G3 कृत्वापहार; G2 कृत्वोपहार (for कृत्वावहार) — b) T1 प्रवेश्य (for प्रविश्य) G2 3 स्वय (for स्वकम्) — After $6^{ab}$, G2 3 repeat lines 1-2 of 62* — c) K1 कुरवस्सहिता, K2 B1.4 D7 °व सहित, K3 °वश्च हित, V1 B5 Dn1 °वः सुहित, B2 3 D4 °व स्वहितं, D2 °वोत्सहित, D6 °वो महित, G2 °वस्सहिता (for °वोऽऽत्महित) — d) D8 समायां (for मन्त्रया-) Ś K2 4 तदा, K1 मिथ, Da1 मिथ, D5 मिया (sic), G1 मिथा (for तदा)

7 K3 om. 7 — a) D6 पर्यङ्केषु (for पर्यङ्केषु) K1.2 पराध्येषु; V1 M4 परार्धेषु, D6 G2 परार्थेषु, T3 G3 पराध्यैषु; G1 [अ]पराध्यैषु, Ca पराध्यैषु (as in text) — b) K1 स्पर्शास्त°, Dn1 D4 स्पर्द्धास्त°; D2 सर्वास्त°; D8 पर्यास्त°; S वरास्त°; Ca o स्पर्ध्यास्त° (as in text) — c) V1 वराहनेषूपविष्टा, Dn1 वरासनेष्वप°, D6 वरासने सु° — d) K1 सुखशय्या बिवाशना (sic), K4 °य्यासु वामरा, Dn1 सुखं शय्यास्विवा°, D6 सुखशय्यासु भारत, D8 °य्यास्थिता नरा — For $7^{cd}$, S subst

63* उपविष्टेषु तेष्वेव राजपुत्रेषु भारत ।
[ T3 G1 3 M तेन्वेव ]

8 a) K3 V1 B1 Dn1 D2 6 8 S तत्र (for ततो) — b) M1 परमफल्गुना; Ca °वल्गुना (as in text) Co cites वल्गुना — c) K3 ततो भाष्य, D6 ताननाथ (for तानाभाष्य) G2 महेष्वास — d) B4 अमन्यत (for अभाषत)

9 Before 9, V1 B1.3 Da1 D1 2 5 6 ins दुर्योधन उवाच — a) Ś1 (before corr as in text) 2 K2 4 V1 B Da1 D1-7 मत (for मतिं) B2 समिमता; Dn1 मतिमता (for मतिमतां) G2 मतिमन्त्रमता श्रेष्ठा, G3 इति मन्त्रिमतश्रेष्ठा — b) Dn1 सर्वं (for सर्वे) — c) Da1 D1 5 गते च, D2 6 8 गतेषु, T3 G1.3 M3 4 गतेन (for गते तु) B (except B1) Da1 D1 3-5 7 किं कार्यं (for यत्कार्यं) — d) B1.2 4 5 Da1 D1 3-5 7 किं च, B3 किं वा (for भवेत्). K4 B Da1 Dn1 D1 3-8 T G M1 2 4 कार्यंतर, V1 कार्यपर; D2 कार्यगतिं, M3 कार्योतर, Co कार्यकर (as in text). K3 नृप (for नृपा)

चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा ।। १०
तेषां निशम्येङ्गितानि युद्धे प्राणाञ्जुहूषताम् ।
समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्चसः ।
आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे ।। ११
रागो योगस्तथा दाक्ष्यं नयश्चेत्यर्थसाधकाः ।
उपायाः पण्डितैः प्रोक्ताः सर्वे दैवसमाश्रिताः ।।१२
लोकप्रवीरा येऽस्माकं देवकल्पा महारथाः ।
नीतिमन्तस्तथा युक्ता दक्षा रक्ताश्च ते हताः ।। १३
न त्वेव कार्यं नैराश्यमस्माभिर्विजयं प्रति ।
सुनीतैरिह सर्वार्थैर्दैवमप्यनुलोम्यते ।। १४
ते वयं प्रवरं नृणां सर्वैर्गुणगणैर्युतम् ।
कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून् ।। १५ C. 8 259 B 8. 10 15 K 8 7. 13

---

10 Before 10, K4 V1 B D (except D2) M1 ins सञ्जय उवाच — a) K1 एवमुक्त, K3 T G M2.4 °मुक्ता, M1.3 °मुक्त्वा (for एवमुक्ते) — b) K1 ययुस्तत्र — c) D5 वक्रुर् (for चक्रुर्) T1 G1.3 M3 नानाविधा (for °विधाश्) K3 चेष्टा, B2 श्रेष्ठा, T1 G1 3 श्रेष्ठा, T2 G2 M1 चेष्टा, Ca c चेष्टा (as in text) — d) Ś1 सिंहासनगदास्, K3 °स्वनगतास्; B2 D- सिं(D5 सि)हावनगता, Da1 सिंहा वनगतास्; D1 सिंहोवनगता, G2 सिंहनादगताम् (for सिंहासनगतास्) K4 कयं, B2 D1 3 यया, B4 T2 G1 3 तथा (for तदा)

11 a) K3 तेषां निशाम्येङ्गितानि, B1 तेषां निशाम्यें गितानि, T1.2 G M1.3 4 इङ्गितानि निशाम्यैषां (G1.3 °म्यैनं), T2 M2 इङ्गितज्ञो निशाम्यै(M3 °शाम्ये)षां — b) S transp युद्धे and प्राणान् Ś1 K3 जुहूषत, T1 जहीर्षतां, T2 G2 जिहीर्षतां, M1 जुहूवतां (sic) (for जुहूषताम्) — c) K2 D1.5 समुदीक्ष्य (for समुद्वीक्ष्य) Dn1 G1 राज्ञां (for राज्ञो) — d) Ś2 K4 B2 3 D2 T2 M1.3 4 °वर्चसम्, V1 B1 T3 G2 3 °तेजसम्, Dn1 °वर्चसां, D3–4.6 7 G1 °तेजसं — f) D2 om वाक्यज्ञो Ś1 K3 आदधे, Ś2 B1 D2 अब्रवीत्, K4 अंदधे (sic) (for आददे) T G1.2 M वाक्यमर्थव(T2 °वि)दाददे (G1 °धे), G3 वाक्यमर्थं समाददे

12 a) Ś2 राग-, D4 प्रीति-, G1 त्यागो, G2 नागो, Ca रागो (as in text) K4 G3 तदा (for तथा) G1 दाक्ष्यो, G2 दक्षेर्, Ca दाक्ष्यं (as in text) — b) K3 नयश्चेत्यर्थसाधका, K4 नयश्चेत्युक्तसाधका, Da1 नयश्चेत्यर्थसाधकः, D1 5 नयश्चत्यर्थसाधका, T1.2 G3 यदाश्चेत्य°, G2 °वायश्चेत्य° Ca cites नय (as in text) — c) K1 उपाय (for उपाया) D6 पाण्डितैः, T1 G3 पांडवैः (for पण्डितैः) — d) Ś2 सर्वे, K1 3 B1.3 D5 ते च, V1 B2–4 Da1 Dn1 D1–7 S ते तु, D8 तेपि (for सर्वे) Ś1 K3 4 देवसमाश्रिता, K3 B2 4 5 D दैवमुपाश्रिता, B2 दैवमपा°, S दैव समाश्रिता (for दैवसमाश्रिता)

13 a) K3 B3 लोके प्रवीराः; Da1 D1.5 लोकेषु वीरा (for लोकप्रवीरा) — c) V1 नीतिर्वंतस् (for नीतिमन्तस्) Cc cites युक्ताः — d) B1 दाक्षा (for दक्षा) B3 T2 रक्षाश्च, M2–4 भक्ताश्च (for रक्ताश्च) T3 G2 3 रक्ता दक्षाश्च; G1 रक्तदक्षाश्च (for दक्षा रक्ताश्च) K4 हृता (for हता)

14 a) Ś1 G1 न त्वैव, K3 न त्वेत्र, D6 न चैव, G2 न त्वेत्त (for न त्वेव) T2 कार्ये (for कार्यं) K1 नैवाच्यम्, D3 नैरास्यम् (for नैराश्यम्) D4 न त्वेव कार्यनैराश्यं — c) D1 सुनीतौरिह, D6 सुनीतैरिह, D8 सुनीतैरिन (for सुनीतैरिह) D6 सर्वार्यां, D8 सर्वार्यो (for सर्वार्थैर्) — d) K1 देवेमप्यनलोमते (sic), K3 देमप्यनुनुलोम्यते (sic), D1 T3 G3 देवमप्यनुलोम्यते; T1 दैवमप्यनुलोमति, T2 °प्यत्र लोक्यते

15 a) K4 Da1 D1 4 5 नृणां (for नृणां) — b) T3 योधगुणैर्, G3 योधगणैर्, M योधगुणैर् (for गुणगणैर्) Da1 D4 युता, G3 धृत (for युतम्) — After 15ab, K4 V1 B D (except D2) ins

64* कर्णमेवाभिषेक्ष्याम सैनापत्येन भारत ।
[K4 B1 °षेक्षाम K4 V1 Dn1 D4 6 सेनापत्येन ]

On the other hand, after 15ab, G1 repeats 8. 5 89–105 in parenthesis (cf v 1 8 5 89) — c) D5 कर्णं- (for कर्णं) G3 सोमपतिं (for सेनापतिं) — d) D2 प्रमजिष्यामहे, T3 G2 प्रमथिष्याम ते (for प्रमथिष्यामहे) — After 15, K3 4 V1 B D S ins

65* एष ह्यतिबलः शूरः कृतास्त्रो युद्धदुर्मदः ।
वैवस्वत इवासह्यः शक्तो जेतुं रणे रिपून् ।
[(L 1) V1 D4 6 एषो D2 एषोप्रति°, G1 एषो ह्यति°, G3 स पश्यति बल° (for एष ह्यतिबल°) K4 °दुर्मद, D5 °दुर्मदा — (L. 2) D2 वैवस्वत Da1 D1 5 G3 शक्यो (D1 °क्ये) K3 4 V1 D6 8 मोद्धुं, (for जेतुं) ]

K4 V1 B D (except D2 6) S cont.

66* एतदाचार्यतनयाच्छ्रुत्वा राजंस्तवात्मज ।
[B2 °पुत्रस्तु (for °तनयात्) Dn1 T2 वाक्य, T1.3 राजा (for राजस्) ]

Dn1 cont S subst. for 16ab

67* दुर्योधनो महाराज प्रियं प्रीतमनास्तदा ।
[G3 महाराजः Dn1 प्रिय, T1 G1.2 M भृश (for प्रिय) T3 G3 तथा (for तदा) ]

C 8 363 B 8 10 20 K 8 7 22 ततो दुर्योधनः प्रीतः प्रियं श्रुत्वा वचस्तदा ।
प्रीतिसंस्कारसंयुक्तं तथ्यमात्महितं शुभम् ॥ १६
स्वं मनः समवस्थाप्य बाहुवीर्यमुपाश्रितः ।
दुर्योधनो महाराज राधेयमिदमब्रवीत् ॥ १७
कर्ण जानामि ते वीर्यं सौहृदं च परं मयि ।
तथापि त्वां महाबाहो प्रवक्ष्यामि हितं वचः ॥ १८
श्रुत्वा यथेष्टं च कुरु वीर यत्तव रोचते ।
भवान्प्राज्ञतमो नित्यं मम चैव परा गतिः ॥ १९
भीष्मद्रोणावतिरथौ हतौ सेनापती मम ।
सेनापतिर्भवानस्तु ताभ्यां द्रविणवत्तरः ॥ २०
वृद्धौ च तौ महेष्वासौ सापेक्षौ च धनंजये ।
मानितौ च मया वीरौ राधेय वचनात्तव ॥ २१
पितामहत्वं संप्रेक्ष्य पाण्डुपुत्रा महारणे ।
रक्षितास्तात भीष्मेण दिवसानि दशैव ह ॥ २२
न्यस्तशस्त्रे च भवति हतो भीष्मः पितामहः ।
शिखण्डिनं पुरस्कृत्य फल्गुनेन महाहवे ॥ २३

Dn1 S cont. K4 V1 B Da1 D1 3–5 7 ins after 66*

68* आशा बहुमती चक्रे कर्णं प्रति स वै तदा ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् ।
तामाशां हृदये कृत्वा समाश्वस्य च भारत ।

[(L 1) B1 सुमहतीं, B2 बहुमतां, B3 बहुमतीं, Da1 Dn1 D1 T G1 2 M2–4 बलवतीं, D7 च महतीं, Co बहुमनीं (as above) Dn1 कृत्वा (for चक्रे) M1 आशा बलवताश्चक्रे T G1 2 M महाबल (for स वै तदा) Dn1 जय प्रति महारथ (for the post half) G3 आशां प्रतिबलां तीव्रां चक्रे कर्णं प्रति बल — (L 2) V1 हते तु भीष्मे, B1 हते भीष्मे*, B3 हते च भीष्मे S हते भीष्मे मृते द्रोणे (for the prior half) T1 जेवेति (for जेष्यति) — B2 om line 3 — (L 3) Dn1 तामसां (for तामाशां) S तामेवमाशां हृदये (for the prior half) K4 D3 समाश्वास्य, S कृत्वाश्वास्य (T2 M °श्वस; G1 2 °न्वास्य, G3 °वास्य) (for समाश्वस्य) B2 भारत ]

16 D3 om. 16ᵃ, S subst 67* for 16ᵃᵇ — ᵃ) D1 दुर्योधनोप्रीत K3 प्रात (for प्रीत) — ᵇ) B1 2 4 5 Da1 Dn1 D1, 3–5 7 श्रुत्वास्य (B5 °त्वा च) तद्वच, B3 श्रुत्वास्य तत्वत (for श्रुत्वा वचस्तदा) — S transp 16ᶜᵈ and 17ᵃᵇ — ᶜ) K3 V1 B D प्रीतिसत्कारसयुक्त (D1 °क्त), T G1 3 M प्रिय(G3 °य)सत्कारसयुक्तं, G2 प्रियसत्कारसत्कार — ᵈ) K3 तथा चात्महित, Dn1 तथामारम°, D6 तथ्यं चात्म° (for तथ्यमात्महित)

17 S transp 16ᶜᵈ and 17ᵃᵇ — ᵃ) K4 स्वमन°, B3 स्वबल, D4 स्व मन; G3 स्वजन, M1 समृतं, M2 4 समतं, M3 संमतं (for स्व मन) D6 समवास्थाप्य, M चाप्यवस्थाप्य, Ca समवस्थाप्य (as in text) T1 वमतं चाप्यवस्थाप्य; T2 स्वमनश्च व्यवस्थाप्य, T3 G1 2 स्वजन च व्यवस्थाप्य — ᵇ) Ś2 B3 बाहुवीर्यं, K3 बहुवीर्यं K2 B2 4 Da1 D1 3 5 अपाश्रित°, V1 lacuna, B1 समन्वित, G2 उपाश्रिता (for उपाश्रितः) D6 कर्णवीर्यं समाश्रित — ᶜ) K1 दुर्योधन- (for दुर्योधनो) K1 -महाराजो, S युधा श्रेष्ठो (for महाराज)

18 ᵃ) Da1 धीर्यं (for वीर्यं) — ᵇ) V1 B1, 2 Da1 D2–4 6 7 T1 G3 परमं (for च परं) Da1 त्वयि (for मयि). — ᶜ) G3 om अपि K1 T1 M1 3 4 त्वा (for त्वां) — ᵈ) D3 प्रवक्षामि

19 ᵃ) D3 क्रतु (sic) (for कुरु) S कुरु वै (for च कुरु) — ᵇ) Ś1 तच (च marg ), D5 तेन- (for तव) — ᶜ) D3 प्राप्य(marg श्यं)तमो, T1 प्राभूत मा (for प्राज्ञतमो) — ᵈ) D5 चेव (for चैव)

20 ᵃ) Ś K2 4 अतिरथौ, K1, 3 B1 Dn1 D2 6 8 S (except T1) स्वतिरथौ (for अतिरथौ) — ᵇ) G1 सेनापतिर् — ᵈ) D3 ह्यभ्या (for ताभ्या) Ś K1 4 द्रविणमत्तर°, K2 °मतर°, V1 °वित्तर°, Ca °वत्तर° (as in text) Cc cites द्रविण॰.

21 ᵃ) T1 M हि (for च) B3 5 D2 4 हतौ (for च तौ) K1 ते (for तौ) — ᵇ) T2 सापेक्षे, G3 साक्षेपौ; M1 सापेक्ष्यौ (for सापेक्षौ) K3 द्वौ (for च) — ᶜ) K1 T2 मानिनौ, B3 नामितौ, G1 मानीतौ, G2 मारितो; G3 माननौ (for मानितौ) K3 B3 D3 T1 महा- (for मया) K4 V1 D6 M2–4 वीर (for वीरौ) — ᵈ) K1 (before corr ) राधेये D2 वचनादपि (for वचनात्तव)

22 ᵃ) D6 पितामहेन मरक्ष्य — ᵇ) K3 पांडुपुत्रान् (for पाण्डुपुत्रा) B3 Da1 D1 5 M1 महारथा (for °रणे) — ᶜ) D6 तानि (for तात) — ᵈ) B2 दिवसास्तु, D3 दिवसास्तु (for दिवसानि) Ś2 K4 V1 B1 Dn1 D2 6 हि, K3 B2–5 Da1 D1 3–5 7 8 S तु (for ह)

23 For the event of Śastranyāsa by Karṇa, cf 5 165 27. — ᵃ) V1 (m as in text) T2 3 G तु (for च) D3 भगवति (for च भवति) Ca n c te भवति (as in text) Dn1 न्यस्तशस्त्रश्च समरे — ᵇ) B3 प्रतापवान् (for पितामह) — ᶜ) K1 शिखंडिना, D3 शिखजिन (for शिखण्डिन) Dn1 पुराकृत्य (for पुरस्कृत्य) — ᵈ) K3 4 V1 B D फाल्गुनेन (for फल्गुनेन) T G M1 महारणे (for महाहवे)

हते तस्मिन्महाभागे शरतल्पगते तदा ।
त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत्पुरःसरः ॥ २४
तेनापि रक्षिताः पार्थाः शिष्यत्वादिह संयुगे ।
स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरम् ॥ २५
निहताभ्यां प्रधानाभ्यां ताभ्याममितविक्रम ।
त्वत्समं समरे योधं नान्यं पश्यामि चिन्तयन् ॥२६
भवानेव तु नः शक्तो विजयाय न संशयः ।
पूर्वं मध्ये च पश्चाच्च तवैव विदितं हि तत् ॥ २७
स भवान्धुर्यवत्संख्ये धुरमुद्वोढुमर्हसि ।
अभिषेचय सेनान्ये स्वयमात्मानमात्मना ॥ २८
देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः ।
तथा भवानिमां सेनां धार्तराष्ट्रीं बिभर्तु मे ।
जहि शत्रुगणान्सर्वान्महेन्द्र इव दानवान् ॥ २९
अवस्थितं रणे ज्ञात्वा पाण्डवास्त्वां महारथम् ।
द्रविष्यन्ति सपाञ्चाला विष्णुं दृष्ट्वेव दानवाः ।
तस्मात्त्वं पुरुषव्याघ्र प्रकर्षेथा महाचमूम् ॥ ३०
भवत्यवस्थिते यत्ते पाण्डवा गतचेतसः ।
भविष्यन्ति सहामात्याः पाञ्चालैः सृञ्जयैः सह ॥३१ C. 8. 379 B. 8. 10. 35 K. 8. 7. 39

---

24 [a]) V1 B (except B1) Da1 D1.3–7 S महेष्वासे (Da1 °स) — [b]) Ś1 V1 B D तथा, S पुनः (for तदा) — [c]) For the event, cf B 7. 5. 17. V1 B1 त्वयोक्त, S त्वयोक्त (for त्वयोक्ते). B1 पुरुषव्याघ्रे, Dn1 पुरुषव्याघ्र, T2 3 G M1 पुरुषव्याघ्रो — [d]) D1 द्रोण (for द्रोणो). In Ś1, the portion from ह्या up to सर is lost on a damaged fol. V1 D2 6 [ऽ]भ्यासीत्, Ce [ऽ]भ्यासीत् (for ह्यासीत्). D7 द्रोणे ह्योरासीत्पुरस्सर (sic), G2 ह्यासीद्द्रोणपुरस्सर.

25 [a]) D8 रक्षित पार्थ (for रक्षिताः पार्थाः) — [b]) Ś1 हव सयुगे, B (except B1) Da1 D1 3–5 7 इति मे मतिः — [c]) G2 3 तथापि (for स चापि). K1 D2 6 7 T2 G2 3 युद्धे (for वृद्धो) — [d]) B1.3 M2–4 संयुगे, D2 T1.2 M1 सत्वर, G2 सत्वरं (for सत्वरम्).

26 In Ś1, the portion from st. 26 up to 30 is mostly lost on a damaged fol. The variants are noted wherever legible. — [a]) V1 B1 D2 6 प्रवीराभ्या (for प्रधानाभ्या) — [b]) K1 4 B1 D5 (before corr.) अमितविक्रम, K3 B1 D2 °विक्रम, T1 G2 3 M1 अतुलविक्रम, T2 3 G1 अतुल्यविक्रम; M2–4 अतुलविक्रम (for अमितविक्रम) — [c]) B1 त्वत्सम (for त्वत्समम्). T2 योद्धुं, M3 4 योध (for योधं) — [d]) Ś1 चिंतयत, D1 चिंतय (for चिन्तयन्).

27 [a]) B3 5 Da1 D1 6 भवानेवाद्य (for भवानेव तु). T2 G च (for तु) — [c]) K1 पूर्वं मध्य च, K3.4 पूर्वमध्ये च, D2 युद्धमध्ये च, T2 3 G M1 पूर्वं मध्ये तु. D2 6 पाचार्ये (for पश्चाच्च) — [d]) Ś1 तव वै, K2 V1 B D (except Dn1) T1 2 M तथैव (T1 °वं) (for तवैव). K2 3 V1 B (except B3) D (except Dn1) T1 M निहित (for विदित). K3 V1 B3–5 Dn1 D2–3 T1 2 M हित, B1 हत, Da1 D1 हि ते (for हि तत्). T3 G निहित च स्वक हित.

28 [a]) K4 धुर्जवत्, Dn1 D2 सूर्यवत् (for धुर्यवत्). G2 M समरे — [b]) D2 धुराम्. K1 B D (except Dn1) S (except T2) अर्हति (for अर्हसि) — [c]) Ś1 K2 D1 2 4 5 सेनान्ये, D6 Cep राधेय, Ca c सेनान्ये (as in text).

29 [b]) Ś1 V1 Dn1 D2 8 5 G1 2 M1 सेनानी, T1 सेनानि, T3 सेनानि — [c]) K4 इमा सेना (for इमा सेना) — [d]) K1 धातुराष्ट्री, K3 D1 धार्तराष्ट्रा, D7 धार्तराष्ट्रा. G2 बिभर्त्व, G3 बिभर्ति, Ca बिभर्तु (as in text). B (except B1) Da1 D1 3 4 7 8 S वै (for मे) — [e]) D3 शत्रुगणान् (for शत्रुगणान्). K4 सर्वे (for सर्वान्) — [f]) B (except B1) Da1 Dn1 D1 3–5 7 8 S transp इव and दानवान्.

30 [a]) K1 अवस्थिर, Dn1 अवस्थित- (for अवस्थित). Ś1 K2 V1 B D (except D8) T2 दृष्ट्वा (for ज्ञात्वा) — [b]) K1 त्वा (for त्वां). Ś1 K4 V1 B D S महारथा (K4 °था) (for महारथम्) — D1 T1 om. 30[c]–31[b] — [c]) K3 D1 7 च (for स). K1 श्रावयिष्यति पाचाला, B3 भविष्यति निरुत्साहा, T3 G विद्रविष्यति पाचाला — [d]) K1 T2 3 दृष्ट्वैव. K4 दानवा — [e]) T3 अस्माक (for तस्मात्त्व) — [f]) K1 प्रकर्षस्व, K3 B1.2 4 5 Da1 D.–7 प्रकर्षेता, V1 प्रकर्षेतां, B3 प्रहृष्येता, D5 प्रकर्षेमा, G1 2 प्रहर्षेथा, M1 प्रकर्षेथा, Ce प्रकर्षेथा (as in text). M4 महाचमू.

31 D1 T1 om. 31[ab] (cf. v. l. 30). — [a]) K4 भवति चस्थिते, B3 भवनवस्थिते (sic) (for भवत्यवस्थिते). T3 छेते (for यत्ते) — [b]) K1 3 V1 B Da1 Dn1 D2–7 T2 3 G1 2 M मंदचेतस, G3 मदतेजस (for गतचेतस). D5 पाडवानामचेतस — [c]) V1 B Da1 Dn1 D2–7 T1 द्रविष्यति; D1 भविष्यति (for भविष्यन्ति). K1 महामत्या, Dn1 G2 महामात्या (for सहामात्या) — [d]) Ś1 K1 3 B3 Da1 Dn1 D1 6 8 पाचाला (for पाञ्चालैः)

C 8 340 B 8 10. 37 K 8 7. 40 यथा ह्यभ्युदितः सूर्यः प्रतपन्स्वेन तेजसा ।
व्यपोहति तमस्तीव्रं तथा शत्रून्व्यपोह नः ॥ ३२

कर्ण उवाच ।

उक्तमेतन्मया पूर्वं गान्धारे तव संनिधौ ।
जेष्यामि पाण्डवान्राजन्सपुत्रान्सजनार्दनान् ॥ ३३
सेनापतिर्भविष्यामि तवाहं नात्र संशयः ।
स्थिरो भव महाराज जितान्विद्धि च पाण्डवान् ॥३४

संजय उवाच ।

एवमुक्तो महातेजास्ततो दुर्योधनो नृपः ।
उत्तस्थौ राजभिः सार्धं देवैरिव शतक्रतुः ।
सेनापत्येन सत्कर्तुं कर्णं स्कन्दमिवामराः ॥ ३५
ततोऽभिषिषिचुस्तूर्णं विधिदृष्टेन कर्मणा ।
दुर्योधनमुखा राजन्राजानो विजयैषिणः ।
शातकौम्भमयैः कुम्भैर्माहेयैश्चाभिमन्त्रितैः ॥ ३६

---

V1 D2 पाचालाश्च ससृंजया (D2 °या), B1 D6 सपांचाला ससृजया°, B2.4.5 D3.4.7 पाचाला सृजयाश्च ह (B5 हि); S पाचालाश्च सकेकया

32 a) K4 सूर्ये (for सूर्यः) — b) K1 प्रतापां, K4 V1 प्रपवन्, D4.6 प्रतपत् (for प्रतपन्) — c) G2 व्यपोहचिमिर तीव्र Ca cites व्यपोहयति, Cc व्यपोहति (as in text) — d) V1 D6 शत्रु (for शत्रून्) K8 व्यपोहति, V1 B1 D2.6.8 T G1.3 M2–4 व्यपोहय, B3–5 Da1 D1.5–5.7 प्रतापय, Dn1 व्यपोह मे, G3 व्यपेतय° (sic), M1 विनाशय° (for व्यपोह न°) — After 32, Ś K V1 B Da1 D1–8 (D2 om line 3) ins

69* संजय उवाच ।
आशा बलवती राजन्पुत्रस्य तव याभवत् ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् ।
तामाशां हृदये कृत्वा कर्णमेवं तदाब्रवीत् ।
सूतपुत्र न ते पार्थः स्थित्वाग्रे सयुयुत्सति ।

[K4 कर्ण उवाच — (L 1) D3.4.7 साभवत् (for याभवत्) Ś K V1 B1 D2.6.8 पुत्राणां तेभवत्तदा, B2 पुत्राणामभवत्तदा; B3 तव पुत्रस्य याभवत् (for the post half) — (L. 2) Ś K B1.6 हते भीष्मे तथा (B1.6 हते) द्रोणे, V1 D2.6.8 हते द्रोणे तथा (V1 हते) भीष्मे, B3 हते च भीष्मे द्रोणे च (for the prior half) D5 कर्णे (for कर्णो) K1 जप्येति, K3 जयति (for जेष्यति) — (L 3) Om in D2. K3 एव (for एव) — (L. 4) K3 गते (for न ते) D2 सूतपुत्रे हते पार्थे, D6 सूतपुत्रो हि ते पुत्र (for the prior half) D1 स्थिताग्रे; D4 (m as above) गृ°ताग्रे V1 D2.4.8 स (for सं) Ś K1.2 स्थित्वाग्रे न (Ś1 K2 °ग्रेण) युयुत्सति, K3 D2.6 Ca प(D2 पु)राभवस्य युयुत्स(K3 °त्स)ति (for the posterior half) ]

On the other hand, Dn1 S ins after 32

70* संजय उवाच ।
एवमुक्तस्तु राधेयो राज्ञा दुर्योधनेन ह ।
राज्ञां मध्ये महाबाहुः प्रीतात्मा स महाबलः ।
हर्षयन्नब्रवीत्कर्णो दुर्योधनमिदं वचः ।

[G2 om the ref — (L. 1) Dn1 हि, T1.2 G2.3 M च (for ह) — (L. 2) Dn1 महारथा° (for महाबलः) ]

33 Dn1 S om the ref. — a) K3 उक्तमे च मया (sic), G2 उक्तमेव त्वया (for उक्तमेतन्मया) — c) D2 येष्यामि (for जेष्यामि) B Da1 Dn1 D1–5.7 G2 सर्वान् (for राजन्) — d) D8 सगणान् (for सपुत्रान्) D2 सहपाडवान् (for सजनार्दनान्)

34 b) K1 तथाहं (for तवाहं) — d) K1 जित्वान् (for जितान्) D1 om. च D8 T2 विजितान्विद्धि पाडवान् — After 34, K4 ins

71* समं ज्वरद्रो[जरद्रो]णमहं महाहवे
ब्रवीमि सर्वे कुरवो निबोधत ।
न वा मदन्यः प्रसहेद्रणेऽर्जुनं
क्रमागतं मृत्युमिवोत्तमामृताव् ।

35 Ś K1–3 T1.2 M om. the ref. — a) Ś K4 B (except B1) Da1 D1–7 महाराज; K1 महाराजस्; K2 मधूराज. (for महातेजास्) — b) T8 तदा, G3 तथा (for ततो) T8 नृप B5 राजा दुर्योधनस्ततः — d) Dn1 दैवैरिव — e) B (except B1) Da1 D3–5.7 सैनापत्येन; D2 शेनापत्येन (for सेनापत्येन) K3 साकर्तुं; T3 G1.2 तं कर्तुं (for सत्कर्तुं) — f) K3 कर्णे (for कर्णं). K1 स्कंधम् (for स्कन्दम्)

36 a) Dn1 [ऽ]भिषिच°, T2 [ऽ]भिसिषिचु° (for ऽभिषिषिचुस्) K1.3 V1 B Da1 Dn1 D1–5.7.8 S कर्णं (for तूर्णं) D6 ततोभिषिंचु कर्णं ते — c) B3 सुयोधन° (for दुर्योधन°) Ś1 दुर्योधन महाराजन् — d) D5 °षिणा; D8 (m as in text) विषयैषिणः; G2 विजिगीषवः; G3 विजिगीषिण (for विजयैषिण°) — e) K3 शातकौंभमयैः; V1 B D (except Dn1) S (except M2) Ca शातकुंभ° (for शातकौम्भ°) — f) V1 B3–5 D3.5.7 मन्त्रैश्चैवाभि(V1 °नु)मन्त्रितै, B1 माहेयैरभि°; B2 महोजैश्चाभि°; Da1 महेयैश्चाभि°; Dn1 राजतैश्चाभि°; D1 महायैश्चाभि°; D6 महार्हैश्चाभि°; D8 मृन्मयैश्चाभि°; T1.3 G2.3 ब्राह्मणैश्चाभि°, T2 ब्रह्मणैश्चाभि°, G1 ब्राह्मणैरभि°, M1 (sup lin as in text) माहेयैश्चापि मंत्रितैः. Co cites मन्त्रै°

तोयपूर्णैर्विपाणैश्च द्वीपिखड्गमहर्षभैः ।
मणिमुक्तामयैश्चान्यैः पुण्यगन्धैस्तथौषधैः ॥ ३७
औदुम्बरे समासीनमामने क्षौमसंवृतम् ।
शास्त्रदृष्टेन विधिना संभारैश्च सुसंभृतैः ॥ ३८
जय पार्थान्सगोविन्दान्सानुगांस्त्वं महाहवे ।
इति तं बन्दिनः प्राहुर्द्विजाश्च भरतर्षभ ॥ ३९
जहि पार्थान्सपाञ्चालान्राधेय विजयाय नः ।
उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ॥ ४०
न ह्यलं त्वद्विसृष्टानां शराणां ते सकेशवाः ।
कृतघ्नाः सूर्यरश्मीनां ज्वलतामिव दर्शने ॥ ४१ C 8 394 B 8 10 51 K 8 7 56

---

37 [a]) K2 B1 3.4 Da1 D3.4 7 तोयपूर्णविपाणैश्च — [b]) Ś1 K2 द्वीपिव्याघ्रमहर्षभैः, K1.4 द्वैपव्याघ्र(K4 द्वीपखड्ग)महर्षिभिः, K3 M3 द्वैपखड्गमहाग्रमैः (M3 °र्षभैः), V1 द्विपपद्मिमहर्षभैः, B1 द्वैपव्यौण्डहर्षिभिः (sic), B2-5 Dn1 D2-4 6-8 G2 3 Cc द्विपखड्गमहर्षभैः, Da1 D1.5 द्वैपयाघ्र° (Da1 °द्र°), T2 **खड्ग°, T3 M2 4 द्वैपखा° (T3 °ख)ड्ग°; G1 द्वैपखड्ग°, M1 द्वीपखड्ग° Ca cites द्वैप, खड्ग and महर्षभ — [c]) K3 वन्यैः, V1 B2 M2-4 धान्यैः (for चान्यैः) B1 3-5 Da1 D1.2-5 7 G2 मणिमुक्तायु-तैश्चान्यैः, Dn1 °मुक्ताफलैर्धान्यैः, D2 °मुक्तायरैर्धान्यैः, D6 °मुक्तामनैर्धान्यैः, D8 G1 3 M1 °मुक्तायुतैर्धा(D8 °धै)न्यैः, T1.3 °मुक्तायुधैर्धान्यैः, T2 °मुक्ताधनैर्धान्यैः — [d]) V1 पुण्यैर्गन्धैस्, D6 पुण्यगन्धैस् (for पुण्यगन्धैस्) Dn1 D1 तथोषधैः; T1 G2 महौषधैः (for तथौषधैः)

38 [a]) K2 अहवर- (sic), B1 औदुम्बरे, D1.5 उदुंबरे, D4 औदुंबरे, D8 औदंबरे (for औदुम्बरे) Ca cites औदुंबर, Cc °र Ś1 K2 3 V1 B D (except Dn1) सुम्यामीनम्, T2 (*also* as in text) तदासीनम् (for समासीनम्) K1 औदुम्बरेण समासीनम् (hypermetric) — [b]) D8 आवते (for आमने) K1 क्षौममृत (sic), K3.4 B D6 क्षौमसमृते, V1 damaged (for क्षौम-संवृतम्) — [d]) K3 समभृतैः, B1 Dn1 सुसंवृतैः (for सुसम्भृतैः) D2 6 समारैश्चापि संवृतैः — After 38, N T G ins

72* ब्राह्मणाः क्षत्रिया वैश्यास्तथा शूद्राश्च संमताः ।
तुष्टुवुस्तं महात्मानमभिषिक्तं वरासने ।
ततोऽभिषिक्तो राजेन्द्र निष्कैर्गोभिर्धनेन च ।
वाचयामास विप्राग्र्यान्राधेयः परवीरहा ।

[(L 1) K1 समता, K4 D1 T2 G2 मानता (T2 °ण-) K3 D6 संमता (D6 °त), V1 B2 D2 6 मंगता, D8 वैष्णवाः (for संमताः) — (L 2) D6 अविषिक्त (for अभिषिक्त) Ś K3 4 महासने (for वरासने) — (L 3) V1 [ऽ]भिषिक्ते, Dn1 °षिक्तो, T3 G2 3 °षिक्त (for °षिक्तो) Ś K1.2 4 D8 T2 transp निष्कैः and गोभि B1 निष्कैर्, Da1 निष्कैर् Ca.c cite निष्कैः and Cc धनेन (as above) — After line 3, T1 ins

73* पूजयामास वस्त्रैश्च विप्रान्वेदविदस्तथा ।

— (L 4) G2 3 यो(G3 या)जयामास, Ca वाचयामास (as above) T G2 3 विप्रांश्च, G1 विप्रांश्च (for विप्राग्र्यान्) D5 रागाधेय (sic) K1 पुनवीरहा (for परवीरहा) T G1.3 ऋग्मि (T1 वाग्मि°, T3 ऋत्विक्) स्तोत्रैः समतत, G2 ऋत्विग्भिस्तो-मैस्तथा (for the post half) ]

T (T2 om line 2) G cont. M ins after 38

74* स व्यरोचत राधेयः सूतमागधबन्दिभिः ।
स्तूयमानो यथा भानुरुदये ब्रह्मवादिभिः ।
ततः पुण्याहघोषेण वादित्रनिनदेन च ।
जयशब्देन शूराणां तुमुलः सर्वतोऽभवत् ।
जयेत्यूचुर्नृपाः सर्वे राधेयं तत्र संगताः ।

[(L 1) T1 व्यरोचत T1.3 G1.2 °बन्दिभिः — (L 2) T1 स्तूयमानोदयो भानोर् — (L 4) T1 तुमुल ]

39 [a]) B Da1 D1.5-6 7 8 सानुगांस्तान्, Dn1 सानुगस्त्व, S मानुवधान् (for सानुगास्त्वं) Ś K2 4 महारणे, V1 D2 6 विशां पते, B5 D3.4 7 महामृधे (for महाहवे) — [b]) B3 5 Da1 D1.5 इति ते, M1 इतीदं (for इति तं) T1 G1.2 वदिन°, T3 भत्रिण, M1 वदिन (for बन्दिनः) — [d]) T1 द्विदाश्च (for द्विजाश्च) K1 D5 G3 पुरुषर्षभ, K3 B1 पुरुषर्षभा, V1 B2-5 Da1 Dn1 D1-4 6 7 पुरुषर्षभ, M3 भरतर्षभ (for भरतर्षभ)

40 [a]) T G1.2 M2-4 जय, M1 जयत् (for जहि) D3 सपांश्चालान् (for सपाञ्चालान्) — G2 om (hapl) 40[b]-42[a] — [b]) K1 राधये, D1 राधेय K3 D3 च, Ca न (as in text) — [c]) K1 उद्यन्निव, T1 उद्यन्नेव K3 B3 महा, T1 M यथा (for सदा) T2 3 G1.3 यथादित्यस् (for सदा भानुस्) T1 M सूर्यस् (for भानुस्) — [d]) K1 तमांस्यग्रैर्गभस्तिभिः (sic)

41 G2 om 41 (cf v l 40) — [b]) B2 4 6 D3 4 7 वै (for ते) K3 D1 M1 सकेशव°, K4 सकेशवा (for सकेशवाः) — In G1, the portion from 41[c] of this adhy up to st 30 of the next adhy is lost on a missing fol — [c]) K3 कृतघ्न; Dn1 ऊलका, D7 8 उलूका, Ca कृतघ्ना (as in text) — [d]) Da1 ज्वलतमिव, G3 चलतामिव (for ज्वलतामिव) D6 वंदानि (for दर्शने)

C 8 395 B 8 10 52 K 8 7 57 न हि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः ।
आत्तशस्त्रस्य समरे महेन्द्रस्येव दानवाः ॥ ४२
अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः ।
व्यत्यरिच्यत रूपेण दिवाकर इवापरः ॥ ४३
सेनापत्येन राधेयमभिषिच्य सुतस्तव ।
अमन्यत तदात्मानं कृतार्थं कालचोदितः ॥ ४४
कर्णोऽपि राजन्संप्राप्य सेनापत्यमरिंदमः ।
योगमाज्ञापयामास सूर्यस्योदयनं प्रति ॥ ४५
तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत ।
देवैरिव यथा स्कन्दः संग्रामे तारकामये ॥ ४६

इति श्रीमहाभारते कर्णपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

---

42 G1 missing (cf. v l 41) G2 om $42^{a}$ (cf. v l 40) — $^{a}$) B (except B1) Da1 D3–5 7 T G3 M1–3 च (for हि) T1 शक्ता (for पार्था) — $^{b}$) T1 3 G2 3 M transp स्थातु and शक्ता — $^{c}$) S (G1 missing) आत्तव-प्रस्य (for आत्तशस्त्रस्य) — $^{d}$) T1 महेंद्रस्यैव (for महेन्द्रस्येव) — After 42, S (G1 missing) ins

75* सजय उवाच ।
स सत्कृत स्तूयमान सुहृद्गणवृतो वृपा ।
कर्णो दुर्योधन वाक्यमब्रवीत्प्रहसन्प्रियम्
दुर्योधनाद्य सगण पाण्डूना प्रवरै सह ।
फल्गुन सूदयिष्यामि त्वत्प्रियार्थं सबान्धवम् ।
सपर्वतार्णवद्वीपा शाधि गा गतपाण्डवाम् । [5]
पुत्रपौत्रप्रपौत्रेषु प्रतिष्ठा गमयिष्यसि ।
नासह्य विद्यते मह्य त्वत्प्रियार्थमरिंदम ।
सत्यधर्मानुरक्तस्य सिद्धिरात्मवतो यथा ।

[(L 1) T1 नृप, G3 रुपा (for वृपा) — (L 4) G2 योधयिष्यामि G2 सवांधव — (L 5) T1 °द्वीपां शाधि मा हतपाण्डवां, G2 °द्वीपानां शाधि तान्गणपाडवा (sic) — (L 6) G3 प्रतिष्ठा च गमिष्यसि (for the post half) — (L 7) T1 2 M3 4 परतप (for अरिंदम) ]

43 G1 missing (cf v l 41) D2 om 43 Before 43, T M ins सजय उवाच — $^{a}$) D4 reads from राधेय up to इवापर (in $^{d}$) on marg (sec m) Dn1 तदा कर्ण, D6 स राधेय — $^{b}$) T2 तदानीं नितरा बभौ — $^{c}$) Ś2 K4 D8 T2 व्यतिरिच्यत, K1 वन्यरिश्य (sic), V1 B Da1 Dn1 D1 3 5 7 अत्यरिच्यत, D4 अत्यशोभत, T1 व्यत्यरुच्यत, T3 G2 प्रत्यरिच्यत (for व्यत्यरिच्यत) — $^{d}$) Ś2 इवापरा (for इवापर)

44 G1 missing (cf. v l 41) — $^{a}$) M4 om (hapl ) the portion from न up to पत्य (in $45^{b}$). K1 सैनापम्य (sic), K3 V1 D1 2 6 8 T G3 सेनापत्ये तु; B Da1 D3. 5 7 सैनापत्ये तु, D4 (marg ) सैन्यपत्ये तु, G2 सेनापत्ये नु (for सेनापत्येन) — $^{b}$) K1 अभिषिद्य, D4 अभिषिंच्य, D5 अभिपृच्य (for अभिषिच्य) — $^{c}$) G2 अमन्यत (for अमन्यत) K3 स चात्मान; T1 तथात्मानं; T2 महात्मान, G2 3 इवात्मान (for तदात्मान) — $^{d}$) K1 3 Dn1 D8 कालमोहित, Da1 °वोदित, D2 °नोदित (for °चोदित)

45 G1 missing (cf. v l 41). M4 om up to पत्य (in $45^{b}$) (cf v l. 44). — $^{a}$) T1 राज्ञा, T3 G2 3 M (M4 om.) राज्ञ (for राजन्) K3 सप्राप्त (for सप्राप्य) — $^{b}$) K1 सैनापद्यम्; K4 सेनापत्तिम्, B1. 2 4 5 Da1 D1–5 7 सैनापत्यम् (for सेनापत्यम्) D8 M1 अरिदम (for अरिंदम) — $^{d}$) B1 सूर्यस्योदयनावधि, B2 °दयनादधि, D5 °देयन प्रति, D6 रूपस्योदयनादधि, D8 सूर्यस्योदयानादिति Ca cites उदयनं (as in text)

46 G1 missing (cf v l 41) — $^{a}$) Dn1 तत्र (for तव) — $^{b}$) G2 3 तव, M2–4 [ऽ]तीव (for तत्र) — $^{c}$) Ś2 स्कध (for स्कन्द) — $^{d}$) K1 सग्रामे, D1 सग्राम (for संग्रामे) B1 तारकक्षये, G3 तारकामयो, Ca as in text

Colophon missing in G1 — *Adhy name* K3 B1–3 Da1 Dn1 D1 3–5 7 T1 2 कर्णाभिषेक, V1 कर्णप्रधानकं चाभिषेक, M1 कर्णाभिषेचन — *Adhy no* (figures, words or both) Ś2 6 (as in text), B1. 2 5 Da1 D5 6 8 10, Dn1 D4 11, T1 3 G2 3 M 7, T2 9. — *Śloka no* Dn1 59

# ७

धृतराष्ट्र उवाच ।
सेनापत्यं तु संप्राप्य कर्णो वैकर्तनस्तदा ।
तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः ॥ १
योगमाज्ञाप्य सेनाया आदित्येऽभ्युदिते तदा ।
अकरोत्किं महाप्राज्ञस्तन्ममाचक्ष्व संजय ॥ २
संजय उवाच ।
कर्णस्य मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
योगमाज्ञापयामास नान्दीतूर्यपुरःसरम् ॥ ३
महत्यपररात्रे तु तव पुत्रस्य मारिष ।
योगो योगेति सहसा प्रादुरासीन्महास्वनः ॥ ४
नागानां कल्पमानानां रथानां च वरूथिनाम् ।
संनह्यतां पदातीनां वाजिनां च विशां पते ॥ ५
क्रोशतां चापि योधानां त्वरितानां परस्परम् ।
बभूव तुमुलः शब्दो दिवस्पृक्सुमहांस्तदा ॥ ६
ततः श्वेतपताकेन बालार्काकारवाजिना ।
हेमपृष्ठेन धनुषा हस्तिकक्ष्येण केतुना ॥ ७ C 8 406 B 8.11.7 K 8 8 7

## 7

1 In G1, st 1–30 are missing (cf v 1 8 6 $41^{ab}$) Before the ref., G2 ins श्रीकृष्णाय नमः — $^{a}$) V1 B Da1 D3–5 Ca सैनापत्य D6 समरे, D8 मप्राप्य, Ca सप्राप्य (as in text) K1 सैनामन्यत्र मप्राप्य (sic) — K2 om. (hapl) $1^{c}$–$2^{b}$ — $^{c}$) K4 ततोक्तश्च, V1 तदुक्तस्तु, B1 D8 T2.3 G2.3 तयोक्तस्तु, B4 यथोक्तश्च — $^{d}$) K4 स्निग्ध-, D8 स्नेग्य (sic) (for स्निग्ध) K1 स्निग्धभ्रातृमसरच (sic), S (G1 missing) स्निग्धो भ्रातृसमो (T1 °मा) हि स (T1 G2 हित°)

2 K2 om $2^{ab}$ (cf v 1 1) — $^{a}$) V1 B1.2.6 Dn1 D6.7 सैन्यानाम्, B3 Da1 D1–5 सेनानाम् (for सेनाया) — $^{b}$) K1 आदित्ये (for आदित्ये) Da1 D5 तथा (for तदा) V1 B1 D8 आदित्या(B1 °त्ये)भ्युदय प्रति, D1 आदित्योभ्युदिते तथा — For $2^{ab}$, S (G1 missing) subst

76* हितश्च प्रियकामश्च मम पुत्रस्य नित्यदा ।

— $^{c}$) S (G1 missing) किमकार्षीन् (T2 अकरोद्यन्) (for अकरोत्किं) K1 महाप्रज्ञस्, D8 M1 महाप्राज्ञ — $^{d}$) M1 सजय

3 D6 om the ref — $^{a}$) D8 कर्णस्तु K3 आस्थाय (for आज्ञाय) — $^{b}$) Ś K1.2 B1.3–5 Da1 D1.3–5.7 पुत्रास्ते D8 तत्र पुत्रस्य मारिष — $^{c}$) B D2–4.7 आज्ञापयामासुर्, Da1 D1.6 M4 अज्ञापयामासुर् (Da1 °सु, M4 °स) — $^{d}$) K1 कदीमूर्यपुरस्सर (sic), V1 B1.2.4.6 D3–6.7 T1.2 Cap नन्दितूर्यपुरःसर (T1 °रा), B3 वंदिहर्य°, Da1 नेरीतूर्य°, Dn1 तदा तूर्य°, D1 दनोदीतूर्य° (sic), D2 नन्दिरूप पुरःसर, D6 वन्दितूर्य°, D8 नादीकूर्य°, T1 तूर्यनाद°, T8 नांदितूर्य°; G2 नानातूर्य°, M1 नादीतूर्यपुरस्सर, Ca यदिमृत्यपुरःसरा Cc cites नन्दितूर्यम्

4 $^{a}$) D8 om तु B Da1 D1.4.7.8 T8 G3 च (for तु) K4 महत्यपदनादे तु (sic), Dn1 D6 महत्यापररात्रे तु, D2 महत्यापररात्रेषु, D5 G2 महत्यपरागे च (G2 °रात्रेण) Cc cites अपररात्रे वा — $^{b}$) V1 B D (except D8) S (G1 missing) सैन्यस्य (D6 सैन्य च) (for पुत्रस्य) K4 मारिप°, Dn1 T2 भारत (for मारिष) — $^{c}$) Ś2 साहस्रा, Ca सहसा (as in text) K1 योगयोगेति सहा*, K3 योगो योग इति क्षिप्र, S (G1 missing) योगो (G2 योग, M4 योगे) योग इति ह्याशु Ca c cite योगो योग — $^{d}$) Ś2 महान्स्वर°, D2 महात्मन° (for °स्वन°)

5 $^{a}$) V1 B1 Da1 T1 M कल्प्यतां, B2.4.6 Dn1 D2.4.6–8 T8 G3 Cc कल्पता, B3 D5 कल्पाता, D1.3 T2 G2 कल्प(D3 T2 °ल्प्य)ता (for नागाना) Ś1 K2 कप्यमानाना, Ś2 illegible, K1.4 कप°, V1 B D S (G1 missing) नाग(B5 T3 G2.3 राज)मुख्याना, Cc कल्पमानानां (as in text) Ca cites कल्पमान — $^{b}$) K3 चराणा (for रथानां) Dn1 च वरूथिनीं, D8 सविरूथिना — $^{c}$) K3 सनह्यता, G2 सनद्धता B1 च पत्तीना, D2 पदा*ना, Bom ed. नराणा च (for पदातीना) — $^{d}$) D3 वाजिनाश्च, D8 (before corr) वाजीना च

6 $^{a}$) B2.3 D3.4.7 चैव (for चापि) M यौधानां — $^{b}$) B3 स्वरता च (for त्वरिताना) — $^{c}$) Ś2 K3 D8 तुमल°; K4 तुमुल — $^{d}$) T1.2 G2 M2–4 दिविस्पृक् K1 T1 स महास् (for सुम°) B1–3 Da1 D1.3–5.7 तत°, T2 तथा (for तदा) Dn1 उदधेरिव गर्जत, D8 दिवस्पृगिव सर्वत

7 $^{a}$) T1 G2 तत- K1 श्वेते पताकेन — $^{b}$) K1.4 बलाकाकारवाजिना; K3 V1 B D T G3 M बलाकावर्ण(B3 °वल्गु)वाजिना (D1 °ना, D5 °ना), G2 बलाकार्णववाजिनौ

C 8. 407 B. 8. 11 8 K. 8 8 8 तूणेन शरपूर्णेन साङ्गदेन वरूथिना ।
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ॥ ८
कार्मुकेणोपपन्नेन विमलादित्यवर्चसा ।
रथेनातिपताकेन सूतपुत्रो व्यदृश्यत ॥ ९
धमन्तं वारिजं तात हेमजालविभूषितम् ।
विधुन्वानं महच्चापं कार्तस्वरविभूषितम् ॥ १०
दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम् ।
भानुमन्तमिवोद्यन्तं तमो घ्नन्तं सहस्रशः ॥ ११

न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष ।
नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ॥ १२
ततस्तु त्वरयन्योधाञ्शङ्खशब्देन मारिष ।
कर्णो निष्कासयामास कौरवाणां वरूथिनीम् ॥ १३
व्यूहं व्यूह्य महेष्वासो माकरं शत्रुतापनः ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान्विजिगीषया ॥ १४
मकरस्य तु तुण्डे वै कर्णो राजन्व्यवस्थितः ।
नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ॥ १५

— c) K3 हैमपृष्ठेन, Dn1 हेमपृष्टेन — d) K3 V1 B1 D6 8 T3 हस्तिकक्षेण (D8 °न), B2-5 Da1 D1 3-5 7 नागकक्षे(D5 °क्ष्ये)ण; D2 हस्तिकक्षिन K1 (before corr) केतुना, B3 हेतुना (for केतुना)

8 a) Ś1 भूपेण (by corr नरेण), K4 तूर्णेन, T1 तूणिना (for तूणेन) K1 भूयोगशरपूर्णेन; K2 नृपेण शतपूर्णेन, V1 B D (except Dn1) T3 G3 M2 तूणीरशतपूर्णेन, G2 तूणीशयस्सपूर्णेन, M1 3 4 तूणीरशरपूर्णेन — b) B1 D6 7 (sup lin) सगदेन; Dn1 सखड्गेन, D1 सागदेन; D2 शागदेन, D7 सगनेन, D8 (by corr) सनादेन, T2 3 G2 3 तोमरेण (T2 °णा) (for साङ्गदेन) M2 4 वरूथिनां — T2 om. 8cd — cd) K3 T1 शतघ्निकिंकिणीशक्तिशूलतोमरवारिणी (T1 °धारिणा), Da1 D1. 5 G2 शतघ्नीकिंकिणीशक्तिः शूलतोमरधारिणा (G2 °पाणिना), Dn1 M2 4 शतघ्नीकं(Dn1 °किं)कणीशक्ति°, M1 शतघ्नीककिणीशक्ति शूल°

9 a) Ś K1.2 4 D6 कार्मुकेनोपपन्नेन, B Da1 Dn1 D1-5 7 8 S (G1 missing) कार्मुकैरु(D4 °रू)प° — b) Ś K2 4 तुमुलादित्यवर्चसा — c) K1 रथेनाभिपताकेन, T2 G2 3 °नापतता तेन — d) K3 व्यदृश्यते, B3 [ऽ]भ्यरोचत, B4 5 Da1 D1. 3-5 7 [ऽ]भ्यदृश्यत, T2 [ऽ]त्यदृश्यत, M3 [ऽ]प्यदृश्यत (for व्यदृश्यत)

10 a) K3 V1 B1 3-5 D (except Dn1 D8) T G2 3 M2-4 ध्माप(G2 °स)यन्, B2 धूमतं (for धमन्त) B2-5 D (except D2 6 8) T1. 2 G2. 3 M2-4 राजन्, T3 शख (for तात) M1 ध्मापययारिज राजन् (sic). — b) Ś1 K1 2 फेनजालविभूषित, D8 हेममालावि° — Ś2 om. (hapl) 10cd — c) K4 विध्वन्वानं (sic), B (except B1) Da1 D1. 3-5 7 विधुन्वानो, T1. 2 G2 M विधून्वान B3 महेश्वास (for महच्चाप) — d) Dn1 S (G1 missing) हेमपृष्ट नव दृढं (T2 3 G2 3 दृढ नृप)

11 a) D3 महात्मानं; M1 महेष्वास — b) G2 मारार्थं (for रथस्थ) B2 रथम (for रथिना) — c) K3 इव प्रेतं, K4 इवोध्यत, D3 इवोधन्व (for इवोद्यन्त) — d) K3 V1 B1 4 5 D2-4 6 7 निघ्नन्, B3 -चिघ्नं, Da1 D1 5 -निघ्नं (for घ्नन्त) V1 B1. 2 Dn1 D2 6 8 समतत°, B3-5 Da1 D1. 3-5 7 S (G1 missing) दुरासद (for सहस्रश°)

12 T1 om 12ab — a) K3 त पार्थव्यसनं केचिन् — b) B3-5 भारत (for मारिष) — c) B2 पुरुषव्याघ्रा, Dn1 °व्याद्व (for °व्याघ्र) — d) K1 नेसिने (sic) (for मेनिरे) B1 मानवा, G2 3 गौरवात् (for कौरवा)

13 a) Dn1 वीर, M यौधान् (for योधान्) K3 ततस्तु स्वरयोधाना — b) Dn1 मारिप B2 शस्त्रशब्देनापि मारिष (hypermetric), T2 भृश शस्तेन मारिष — c) K2 कर्णौ K1 निष्कपयामास; K3 निष्काश°; K4 निष्काम°, V1 नि:काल°, B1. 3-5 Da1 D1. 3-5 7 निष्कर्ष°; B2 T1 3 G2 3 M निष्क्राम°, Dn1 नि:क्राम°, D2 निक्राम°; D6 निष्काल°, T2 निस्कास° (for निष्कास°) — d) Ś2 K1 4 Dn1 कौरवाना K1. 3 महाचमू, V1 B D S (G1 missing) महद्बल (for वरूथिनीम्)

14 a) B3 D5 om व्यूह B2 Dn1 व्यूह्य व्यूहं (by transp), D2 व्यूढ व्यूह्य K1 Dn1 महेष्वासं (for °सो). — b) Ś2 माकार, K3 4 V1 B D (except D4) T1. 2 M मकर V1 B1. 2 D6 T2 शत्रुतापन (for °न°) — For 14ab, T3 G2 3 subst.

77* मकरव्यूहमास्थाय दशितो रविनन्दन ।

— c) D1 प्रत्यद्ययो (sic), D8 (before corr) प्रत्युद्ययुस् (for °द्ययौ) B2 D7 T1 तथा कर्ण°, G2 महाराज (for तदा कर्ण°) — d) D5 8 विजा(D8 °ज)गीपया, D6 विजिगीपवान्, T1 प्रति भारत (for विजिगीषया) G2 कर्ण° पार्थजिगीपया

15 a) B3. 5 तुंडेन, B4 तुडे च, Da1 D1 5 तुडे तु (for तुण्डे वै) K1 मकारस्य च तुंडे वै, Dn1 D8 T2 मकरस्य त्वथ तुडे, T1 3 G2 3 M मकरस्याथ तुडे तु — b) D5 व्यवस्थिते° K3 कर्णं राजन्नवस्थित° — c) V1 B1 Dn1

द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः ।
मध्ये दुर्योधनो राजा बलेन महता वृतः ॥ १६
वामे पादे तु राजेन्द्र कृतवर्मा व्यवस्थितः ।
नारायणबलैर्युक्तो गोपालैर्युद्धदुर्मदः ॥ १७
पादे तु दक्षिणे राजन्गौतमः सत्यविक्रमः ।
त्रिगर्तैश्च महेष्वासैर्दाक्षिणात्यैश्च संवृतः ॥ १८
अनुपादस्तु यो वामस्तत्र शल्यो व्यवस्थितः ।
महत्या सेनया सार्धं मद्रदेशसमुत्थया ॥ १९
दक्षिणे तु महाराज सुषेणः सत्यसंगरः ।
वृतो रथसहस्रैश्च दन्तिनां च शतैस्तथा ॥ २०
पुच्छे आस्तां महावीरौ भ्रातरौ पार्थिवौ तदा ।
चित्रसेनश्च चित्रश्च महत्या सेनया वृतौ ॥ २१
ततः प्रयाते राजेन्द्र कर्णे नरवरोत्तमे ।
धनंजयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् ॥ २२
पश्य पार्थ महासेनां धार्तराष्ट्रस्य संयुगे ।
कर्णेन निर्मितां वीर गुप्तां वीरैर्महारथैः ॥ २३
हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः ।
फल्गुशेषा महाबाहो तृणैस्तुल्या मता मम ॥ २४ C. 8. 243 B. 8. 11. 24 K. 8. 8. 24

---

T1. 2 G2. 3 M नेत्रयो (for नेत्राभ्या) K1 शूरा, T1 चैव (for शूर) — d) D1 (by corr.) उल्कश्च K3 महाबल°, D1 महाथा (for °रथ) K1 नल्कश्च महारथ, D5 उल्कय महारथ (corrupt)

16 a) B1 द्रोणपुत्रस्य, B2 °पुत्रश्च — b) Da1 D1. 5 सर्वयादवा; T1 सर्वतो नृपा (for °सोदरा) — c) Dn1 राजन् (for राजा)

17 a) K3 B Da1 Dn1 D1. 2 7 8 T G1 M वामपादे; V1 वामे भागे, D5 वामभागे (for वामे पादे) G2 वामपदेन राजेंद्र — c) Da1 Dn1 D1. 6 S (G1 missing) गुप्तो (for युक्तो) — d) D1 लोकपालैर् (hypermetric) (for गोपालैर्) Ś1 K3 V1 B (except B1) D S (G1 missing) युद्धदुर्मदैः

18 a) K1 पदे, D5 (before corr.) पादो, G2 पादा (for पादे) Dn1 दक्षणे — b) D1 गौतम — c) K2 त्रिगर्तैश्च, B2 D1 त्रैगर्तैश्च, Dn1 त्रिगर्तैश्च, D. त्रैगर्तैश्च K4 B1. 2 D2. 7 मु; T1 तु (for च) D1 महेष्वासे — d) K1 दक्षिगात्यैश्च, K3. 4 दक्षिणात्यैश्च D1 संवृता

19 a) Ś1 K2 अनूपादस्तु, B3 M2. 4 अनुपादं तु, D2 अन्वपादस्तु, T2 तत्र पादस्तु (for अनुपादस्तु) Ca cites अनुपादस् (as in text), Cc अनुवाद K2 राजन्; G2 अन्तस्, G3 वीरस्, Cs वामम् (as in text) K1 अनुपादान्तु यो वामाम्, D1 °पादस्तु वामपार्श्वे (hypermetric) — D2 om. 19c–20b. — d) Dn1 मद्रदेश-समुच्छ्रया, S (G1 missing) नानादेशसमुत्थया (T1 °समुद्भया)

20 D2 om 20ab (cf. v. l. 19) — a) K1 (before corr.) दक्षिगेन्तु, B1. 4 Da1 D1 दक्षिणेन Cc cites दक्षिणे (as in text) T3 महाराज — b) K4 V1 सुखेण K2 सत्यमत्पर, B2 सत्यविक्रम, Ca सत्यसगर (as in text) — c) B Da1 D1–5 7 रथसहस्रेण; D5 °सहस्रैस्तु — d) D6 तु (for च) V1 B Da1 D1 2–5 7 त्रिभिः शतैः (for शतैस्तथा) Dn1 D2 6 तदा (for तथा) K3 दंतिना त्रिशतैस्तथा

21 a) Ś K1. 2. 4 V1 B1 D2 6 T1 3 G3 M पुच्छे ह्यास्ता, B2 3 D1. 3 4 7 पुच्छेप्यास्ता, B1 5 पुच्छेत्वास्ता, Da1 D8 पुच्छेयास्ता, Dn1 पुच्छेत्वास्तां, D6 पुच्छे त्वास्ता, T2 पुच्छे चास्ता V1 B D (except D5 8) T G2 M महावीर्यौ G2 प्रपुच्छे*****. — b) V1 B1 Dn1 D2 6 पार्थि(Dn1 °र्थे)वर्षभौ, D5 T1 M पार्थिवोत्तमौ, T2 3 G1 3 °वात्मजौ (for पार्थिवौ तदा) K1 B3 तथा — c) B2 3. 5 Da1 D1–5 7 8 चित्रश्च चित्रसेनश्च, Dn1 चित्रसेनो विचित्रश्च, S (G1 missing) विचित्रश्चित्रसेनश्च — d) Dn1 वृतैः; D8 वृतो

22 a) B (except B1) Da1 D2–5 7 तथा (for तत) K1 प्रयाने, D2 प्रजाते, D8 प्रयते (for प्रयाते) — b) K4 नरवरोत्तमे, D1 °रोत्तमौ, T3 G2 3 रथवरोत्तमे — c) K1 अभिप्रेक्ष, D5 प्रतिप्रेक्ष्य (for अभिप्रेक्ष्य) — d) D2 धर्मराजा

23 Before 23, D5 ins. युधिष्ठिर उवाच — a) K4 D2 T1. 2 G1 3 M यथा सेना, V1 B D3 4 6 7 यया सेना (for महासेना) — b) V1 B1. 3–5 Da1 D1–7 धार्तराष्ट्री-(Da1 °ष्ट्रीं)ह, B2 °राष्ट्री च, T1 °राष्ट्रं तु; T3 °राष्ट्रा तु, G2. 3 M °राष्ट्रीं तु (for °राष्ट्रस्य) Dn1 D8 धार्तराष्ट्रीं महारणा (D8 °चमूम्) — c) V1 B1 D2 निर्मिता, B2–5 D3–5 विहिता; Da1 D1 विहिता, D7 निहिता (for निर्मिता) B1 वीरैर् — d) V1 B1 युक्ता, B2–5 D2–4. 7 गुप्ता V1 T1 2 M1–3 शूरैर्, G2 श्वेतैर् (for वीरैर्) D6 धार्तराष्ट्रे-महायुधे

24 a) Ś1 (sup. lin. as in text) K1. 2 D8 हतवीर्यतमा, K4 °वीरयमा (sic), Cc °तमा (as in text) — b) Ś1 धार्तराष्ट्रे, T2 धार्तराष्ट्र (for °राष्ट्री) K3 धार्तराष्ट्र-महाचमूः, T1 °राष्ट्रमहाचमूः — c) Ś1 K2 फल्गुनैषा, Ś1 K4 फाल्गुनैषा, K3 फल्गुपौषा, V1 B1 3 D5 कर्णशे(B1 °से)षा;

C 8.om B 8.11 25 K. 8.8 23

एको ह्यत्र महेष्वासः सूतपुत्रो व्यवस्थितः ।
सदेवासुरगन्धर्वैः सकिंनरमहोरगैः ।
चराचरैस्त्रिभिर्लोकैर्योऽजय्यो रथिनां वरः ॥ २५
तं हत्वाद्य महाबाहो विजयस्तव फल्गुन ।
उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः ।
एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ॥ २६
भ्रातुस्तद्वचनं श्रुत्वा पाण्डवः श्वेतवाहनः ।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ २७
वामपार्श्वेऽभवद्राजन्भीमसेनो व्यवस्थितः ।
दक्षिणे च महेष्वासो धृष्टद्युम्नो महाबलः ॥ २८
मध्ये व्यूहस्य साक्षात्तु पाण्डवः कृष्णसारथिः ।
नकुलः सहदेवश्च धर्मराजश्च पृष्ठतः ॥ २९
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
नार्जुनं जहतुर्युद्धे पाल्यमानौ किरीटिना ॥ ३०
शेषा नृपतयो वीराः स्थिता व्यूहस्य दंशिताः ।
यथाभावं यथोत्साहं यथासत्त्वं च भारत ॥ ३१
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
तावकाश्च महेष्वासा युद्धायैव मनो दधुः ॥ ३२

---

Co फल्गुशेषा (as in text) Ca cites फल्गु $T_1$ महाबाहु — $T_1$ om (hapl) $24^d$–$26^a$. — $^d$) $Ś_2$ $K_4$ तृणस्तुल्या म($K_4$ ग)ता मम, $V_1$ $T_{2\ 3}$ $G_{2\ 3}$ तृणैस्तुल्यतमा मम ($T_{2\ 3}$ $G_3$ मता)

25 $T_1$ om 25 (cf v l. 24) — $^a$) $B_1$ एषो (for एको) $B_3$ महाबाहो (for महेष्वास°) — $^b$) $V_1$ $B_1$ $D_2$ $M_{2-4}$ विरोचते, $B_{2-5}$ $Da_1$ $Dn_1$ $D_{1\ 3-7\ 8}$ (by corr) विराजते, $T_{2\ 3}$ $G_{2\ 3}$ $M_1$ व्यरोचत (for व्यवस्थित°) $D_8$ (before corr) सूतपुत्रेव राजते — $^e$) $Dn_1$ लोके (for लोकैर्) — $^f$) $K_4$ $D_6$ योजयो, $Dn_1$ योजेयो (for योऽजय्यो) $T_{2\ 3}$ $G_{2\ 3}$ M अजय्यो ($T_2$ $G_3$ °जेयो, $G_2$ °मेयो) यो महारथ° Ca o cite अजय्यो (as in text).

26 $T_1$ om $26^a$ (cf v l 24) — $^b$) $M_1$ विजयं K (except $K_1$) $V_1$ B D फाल्गुन — $^c$) $K_3$ उद्धृतश्च T $G_{2\ 3}$ $M_1$ उद्धृत च भवे($T_2$ °च)च्छल्य — $^d$) $K_1$ सम-, $M_{2-4}$ महान् (for मम) $K_2$ T $G_{2\ 3}$ M मम द्वा($K_2$ $T_1$ $M_1$ महद्वा)दशवार्षिक — $^e$) $B_1$ एव गत्वा, Ś ($G_1$ missing) एतज्ज्ञात्वा (for एवं ज्ञात्वा) $M_{2-4}$ महेष्वास (for महाबाहो) — $^f$) $B_1$ $Dn_1$ $M_1$ व्यूह व्यूह (by transp), $Da_1$ $D_{1\ 5\ 8}$ व्यूह व्यूह्य $K_1$ तथेच्छसि, $Dn_1$ $D_8$ यथेच्छक (for °च्छसि) $T_2$ व्यूह्य व्यूहितुमर्हसि, $T_3$ $G_{2\ 3}$ व्यूह व्यूहितुमिच्छसि

27 Before 27, $T_{2\ 3}$ $G_3$ M ins संजय — $^a$) B (except $B_1$) $Da_1$ $D_{1\ 3-5}$ एतद्वच (for तद्वचन) $D_2$ भ्रातुस्तव वचन श्रुत्वा (hypermetric), $T_{1\ 3}$ $G_{2\ 3}$ M श्रुत्वा तद् ($G_3$ तु) वचन भ्रातु° — $^b$) $D_1$ पाडव; S ($G_1$ missing) कौंतेय ($G_2$ $M_{1\ 3}$ °य) (for पाण्डव°) — $^c$) $K_1$ अर्धचद्रे, $Da_1$ $D_{1\ 5}$ °चद्रेन — $^d$) $D_6$ व्यत्यव्यूहत, $T_1$ प्रति°, $G_2$ $M_{2-4}$ प्रत्यव्यूह्यत $K_1$ (*sup lin*) च (for ता)

28 $^a$) $K_1$ भवेद् (for ऽभवद्) $V_1$ वामे पार्श्वे महाबाहो, B D वामपार्श्वे तु तस्याथ ($Dn_1$ महाराज, $D_2$ ॥ महाबाहुर्), S ($G_1$ missing) वामभागे तु राजेंद्र — $^b$) $T_2$ (before corr) व्यरोचत (for व्यवस्थित°) $D_5$ भीमसेनोप्यवस्थित° — $^c$) $Ś_2$ $K_4$ $T_1$ दक्षिणेन, $Da_1$ $D_{1.6\ 7}$ $T_{2\ 3}$ $G_{2.3}$ M °णे तु (for °णे च) $K_1$ महेष्वासौ, S ($G_1$ missing) महाबाहुर् ($T_1$ °बाहो) (for महेष्वासो) — $^d$) $V_1$ $T_2$ $M_1$ महारथ, B $Da_1$ $D_{1\ 3-5\ 7\ 8}$ $T_3$ $G_{2\ 3}$ $M_{2-4}$ व्यवस्थित° (for महाबल°)

29 $B_2$ om. 29 — $^a$) $K_3$ $V_1$ B ($B_2$ om) D राजा तु ($Dn_1$ $D_8$ राजासीत्), S ($G_1$ missing) राजेंद्र (for साक्षात्तु) — $^b$) $K_3$ $V_1$ B ($B_2$ om) D S ($G_1$ missing) पाडवश्च धनंजयः — $^c$) $D_1$ नकुल — $^d$) $V_1$ B ($B_2$ om) D $T_3$ धर्मराज($D_2$ °जा)स्य

30 $^a$) $V_1$ $D_6$ $T_1$ च (for तु) $T_1$ पाचालौ — $^b$) $K_1$ $D_1$ $T_2$ युधामन्युत्त($K_1$ °तु)मौजसौ, $T_1$ °न्युत्तमोजसौ — $^c$) S ($G_1$ missing) पार्थं न (for नार्जुन) $Da_1$ $D_{1\ 3}$ मध्ये (for युद्धे) — $^d$) $K_3$ पापात्मानौ (for पाल्यमानौ)

31 $G_1$ resumes — $^a$) $Da_1$ $Dn_1$ $D_{1\ 5}$ वीरा — $^b$) $K_{1\ 4}$ $T_3$ G M दसिता°, $T_2$ रक्षिण° (for दशिता°) — $^c$) $Ś_2$ $K_3$ $V_1$ B D S यथाभाग (for यथाभाव) — $^d$) $K_3$ यथा सत्र, $B_1$ यथातत्त्व, $B_{3\ 4}$ $D_{3\ 4\ 7}$ यथायत्त, $D_2$ यथामत्य, S (except $T_2$ $G_1$) यथासत्त्व

32 $^a$) $D_8$ एवमेन, $T_1$ $G_1$ एवमेतं, $G_3$ एवमेते $D_8$ यथा व्यूहं (for महा°) — $^b$) $K_1$ व्यूह, $K_2$ व्यूहं; $D_5$ व्युह्य $K_1$ पाडव° — $^d$) $D_5$ मने (for मनो) $V_1$ (before corr) दद्यु° S युद्धायैवावतस्थिरे ($G_1$ °यैव व्यवस्थिता°)

यानि कर्माणि कुरुते प्रत्यक्षाणि तथैव ते ॥ १२
पूर्वं न समरे ह्येवमवधीदर्जुनो रिपून् ।
अहन्यहनि मद्रेश द्रावयन्दृश्यते युधि ॥ १३
भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते ।
तं भागं सह कर्णेन युगपन्नाशयाहवे ॥ १४
सूर्यारुणौ यथा दृष्ट्वा तमो नश्यति मारिष ।
तथा नश्यन्तु कौन्तेयाः सपाञ्चालाः ससृञ्जयाः ॥१५
रथानां प्रवरः कर्णो यन्तॄणां प्रवरो भवान् ।
संनिपातः समो लोके भवतोर्नास्ति कश्चन ॥ १६
यथा सर्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवम् ।
तथा भवान्परित्रातु कर्णं वैकर्तनं रणे ॥ १७
त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति ।
देवतानामपि रणे सशक्राणां महीपते ।
किं पुनः पाण्डवेयानां माविशङ्कीर्वचो मम ॥ १८
दुर्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः ।
त्रिशिखां भ्रुकुटीं कृत्वा धुन्वन्हस्तौ पुनः पुनः ॥ १९ C 8 1354 B 8 22. 30 K 8 23. 33

— f) K3 D3 S तथै(M1 °वै)व च, B D1 7 तथै(B1 3 °वै)व तत्, Da1 D1. 2 5 6 च (D3 हि, D6 [इ]ह) यानि ते; D8 तथैव तु (for तथैव ते)

13 a) T2 पुनर्, M2–4 पूर्वः V1 B Da1 Dn1 D1 5 7 G3 न, D2 तु, M3–4 स (for न) — b) T2 M1 मावधीद् — After 13ab, N T2 ins

217* इदानीं विक्रमो ह्यस्य कृष्णेन सहितस्य च ।
कृष्णेन सहित पार्थो धार्तराष्ट्रीं महाचमूम् ।

[(L. 1) Ś K1 2 4 D2 T2 ह्येष (for ह्यस्य) D3 महितेन Ś K1. 2 D8 हि, B1 3 Da1 D1. 5 इ, D2 तु (for च) ]
— c) Ś K2 मद्रेन्द्र — d) V1 D2–4 7 प्रमथन्, B2 भवदान् (sic), D6 प्रथम; G2 द्रवयन् D8 S transp दृश्यते and युधि

14 a) B1 [ऽ]विशिष्टः — b) K3 महाच्युते, K3 °रथ, D5 °द्युति — c) B4 m D2–4 7 तौ भागौ (D2 °गं) G2 युधि (for सह) — d) Ś1 K B3 Da1 D1 2 5 T2 M1 (sup lin. as in text) नाशयाव(B3 T2 °म)हे, Dn1 D3 °याध हि (for °याहवे) — After 14, K3. 4 V1 B D S ins

218* अरुणेन यथा सार्धं तम सूर्यो व्यपोहति ।
तथा कर्णेन महितो जहि पार्थं महाहवे ।

[(L. 1) D6 यथा सार्धं K3 D8 सहायेन, B2 यथा सर्वं (for तम सूर्यो) B1 निहन्ति हि (for व्यपोहति) — (L. 2) K3 D2 6 8 पार्थान्, D1 M3 पार्थे K1 T3 G M महारणे, D2 T2 °रथ (D2 °थ), T1 °द्रुते (for °हवे) ]
K3 4 V1 B D cont Ś K1. 2 ins after 14

219* उद्यन्तौ च यथा सूर्यौ बालसूर्यसमप्रभौ ।
कर्णशल्यौ रणे दृष्ट्वा विद्रवन्तु महारथा ।

[D2 om line 1 — (L 1) Ś K D2 उद्यन्निव, D1 7 उद्यन्तौ च Ś K Dn1 सूर्यो, B1 शूरौ Ś1 बाल्सूर्य (for °सूय-) Cv cites line 1 as above — (L. 2) Ś K2 4 शल्यकर्णौ D8 रथे (for रणे) Da1 D6 महायशा, D1 °द्रुते (for रथा ) ]

15 b) K4 मारिष; T3 G3 मद्रप — c) T1 तदा (for तथा) K4 D1 T G नश्य(D1 °श्य)ति; B3 नश्यं च (sic) — d) V1 B2 पाञ्चालाश्च, B5 सपचाला G2 पाचाला सहसृजया

16 a) V1 B D S रथिना — b) B2 योतॄणा (sic), Da1 यन्तॄणां, D3 नृणा तु — After 16ab, B2 4 (marg ) ins 220* — c) B1 2 m. 3–5 Dn1 D8 सनिपाते D3 यमो (sic) (for समो) — d) Dn1 भवत्या (for भवतोर्) S भविता नास्ति नाप्य(M2 °स्त्य)भूत् — B2 4 (marg ) ins after 16ab Da1 D1–7 subst for 16cd

220* संयोगो युवयोर्लोके नाभूस्न च भविष्यति ।

[D2 रणे तु (for संयोगो) D6 नैव (for न च) ]
— After 16, T1 ins 221*

17 T1 om. 17 — b) D6 पांडवान् (for पाण्डवम्) Ś2 वार्ष्णेय प्रतिमद्रल, Dn1 वार्ष्णेया सति पांडवान् — c) Dn1 D6 परित्रातु; D7 अपि त्रातु (for परित्रातु) — d) B5 D2 युधि (for रणे) — T2 3 G ins after 17 T1, after 16

221* सारथ्य क्रियता तस्य युध्यमानस्य संयुगे ।
यथा च समरे कृष्णो रक्षते सर्वतोऽर्जुनम् ।
तथा त्वमपि राधेय रक्षस्व च महारणे ।

[ (L 1) G2 अस्य (for तस्य) — (L 2) G2 हि (for च) ]

18 a) G2 [अ]प्येष — b) Ś2 K4 T1 ह्यप्रधृष्यो; K3 D5 नम्र , V1 प्रधृष्यो न — c) K1 दैवतानाम् S देवानामपि संग्रामे — f) S न (for मा) V1 B D विशङ्कीर्

19 Before 19, all MSS ins संजय उवाच — M om 19ab — b) V1 क्रोधेन मूर्छित, T2 क्रोधवशं गत (for क्रोधसमन्वित) G2 क्रोधामर्षसमन्वित — T G ins after 19ab M after the ref

222* धार्तराष्ट्रमथोवाच सृक्किणी परिलेलिहन् ।
एवमुक्तस्तु स क्रोधात्तदा स्पृष्ट इवोरग ।

C 8 1355 B 8 32 31 K 8 33 33 क्रोधरक्ते महानेत्रे परिवर्त्य महाभुजः ।
कुलैश्वर्यश्रुतिबलैर्दृप्तः शल्योऽब्रवीदिदम् ॥ २०
अवमन्यसे मां गान्धारे ध्रुवं मां परिशङ्कसे ।
यन्मां ब्रवीषि विस्रब्धं सारथ्यं क्रियतामिति ॥ २१
अस्मत्तोऽभ्यधिकं कर्णं मन्यमानः प्रशंससि ।
न चाहं युधि राधेयं गणये तुल्यमात्मना ॥ २२
आदिश्यतामभ्यधिको ममांशः पृथिवीपते ।
तमहं समरे हत्वा गमिष्यामि यथागतम् ॥ २३
अथ वाप्येक एवाहं योत्स्यामि कुरुनन्दन ।
पश्य वीर्यं ममाद्य त्वं संग्रामे दहतो रिपून् ॥ २४
न चाभिकामान्कौरव्य विधाय हृदये पुमान् ।
अस्मद्विधः प्रवर्तेत मा मा त्वमतिशङ्किथाः ॥ २५
युधि चाप्यवमानो मे न कर्तव्यः कथंचन ।
पश्य हीमौ मम भुजौ वज्रसंहननोपमौ ॥ २६
धनुः पश्य च मे चित्रं शरांश्चाशीविषोपमान् ।
रथं पश्य च मे क्लृप्तं सदश्वैर्वातवेगितैः ।
गदां च पश्य गान्धारे हेमपट्टविभूषिताम् ॥ २७
दारयेयं महीं क्रुद्धो विकिरेयं च पर्वतान् ।

---

[(L 1) T2 अथोद्वीक्ष्य (for °वाच) T3 G2 सफणी — (L 2) T3 G3 संक्रोधात्, G1 संक्रुद्ध, G3 विक्रोशात् ] — °) K3 Dn1 त्रिशाखां (for त्रिशिखां) Ś2 K3 Dn1 भ्रु(K3 भृ)कुटीं, V1 B Da1 D3 7 8 भ्रुकुटिं — d) K1 भ्रुव; T1 G2 M2–4 धून्वन् S (except T3) हस्तं

20 D1 om 20ab — a) D6 क्रोधरक्तो महानेत्रो — b) B (except B1) D2–4 6 7 T परिवृत्य T1 महारथ° — c) K3 V1 B D T2 3 G M -श्रुत(K3 -द्युति)-बलैर् Ca cites श्रुतं — After 20, S reads 30–38

21 Before 21, all MSS (except D3 T1 M1) ins शल्य उवाच — a) Hypermetric K3 Dn1 D3 अवजानासि, B1 4 5 D2–4 6 7 अवमन्यसि (D2–4 °से); B2 मावमन्यत, T1 G2 अमन्यसे मां; M2 अशंकसे मा; M3 4 अतिशंकसे मा (for अवमन्यसे मां) M1 मा (for मा) — b) K4 ध्रुवञ्च, B2 यत्कर्ण, D6 वचनं; T1 ध्रुवश्च (for ध्रुवं मा) K1.3 V1 B3 5 Dn1 D2–4 7 8 T2 3 G M च; B1 4 Da1 D1 5 वा (for मा) K3 परिकेशये; B2 °कत्थसि, D3 °शकसि; T G M1 [अ]प्यतिशकसे, M2–4 [अ]प्यवमन्यसे — c) K1 यन्मा, V1 S यस्माद् T1 ब्रवीषे Some MSS विश्रब्ध, D2 विद्विष्ट, T G1 3 M विस्रब्ध°, G2 सरब्ध°; Ca विश्रब्ध — d) K4 सारथिं च क्रियामिति

22 a) Ś1 K2 असत्तोप्यधिकं, G1 °दभ्यधिकं Dn1 कर्णो — b) T G1 3 M मन्वानस्त्व (T1 °स्त्व), G2 आराजस्तं (for मन्यमान°) — c) M1 चेय (for चाहं) — d) K2 Da1 गणयेत् K2 3 V1 B2 3 Dn1 D2–4 6 7 T2 3 G1.3 M2.3 आत्मन°

23 a) D3 सदिश्यताम् B3 मदधिको, Da1 D1 5 अप्यधिको; G2 अभ्यधिके — b) Ś2 K1 समाश°, T1 यो मम (for ममाश°) Ca cites अंश° K4 पृथिवीपते°, G2 मादश° पते — c) K3 तमरिं (for तमहं). B1 2 D7 8 (sup lin as in text) जित्वा; D3 भित्त्वा (for हत्वा)

24 a) D3 हि (for [अ]पि) Da1 D1 एकम् (for एक) — b) D3 कुलनदन, S तव शत्रुभि° — c) K3 धैर्यं (for वीर्यं) D3 ममात्यंत — d) K1.2 वहतो; V1 सहतो, G2 निहतान् (for दहतो).

25 a) K3 न वाप्यकामं, V1 Da1 Dn1 D1 5 S न (D1 त) चापि कामान् (D5 °मात्), B1.5 D4 6 न चाभिमानं (D4 °नात्), B2–4 D3 7 यथाभिमान (D3 °मानान्) D2 न चातिकामान्; D8 भूते न कामान् (marg. न चातिकामं) (for न चाभि°) Ca cites अभिमानात् Cv तवातिकाम कौरव्य — b) K1 V1 B D S निधाय — d) V1 B1–4 D (except D4) मा मां, T2 G3 ममा (for मा मा) K3 V1 B Da1 D1–7 अभिशंकिथा (K3 °त°); Dn1 अपि शकिथा°, D8 G2 इति शकि(G2 °क)थाः; T1.3 G1 3 M अति(M3 °वि)शंकया°, T2 अभिशकय (for अतिशङ्किथा°).

26 a) B2 युद्धे; T3 G1 3 अपि, G2 अधि (for युधि) K1 V1 B5 D3 4.6 7 T2 M1 वा (for च) D6 [अ]य मानो (for [अ]वमानो) — b) V1 कदाचन (for कथचन) — c) K3 V1 B5 Dn1 D2–4 6 7 पीनौ; D3 S भीमौ (for हीमौ) — d) S वज्रसहननौ दृढौ

27 a) K3 चतु° (sic) (for धनु°) Da1 D1 G2 पश्यत (for पश्य च) K1 om. (hapl.) from चित्रं up to मे (in c) B2 मित्र, D3 भिसं, D3 (marg sec m) दिव्यं (for चित्रं) — c) D1 5 कथ (for रथं) Ś2 K4 Dn1 च पश्य (by transp), Da1 D1 5 पश्यत K3 युक्तं, T2 3 G चित्र (for क्लृप्त) — d) K3 अतिवेगितै°, D3 वातवेगिभिः; T2 वायुवेगितै° (for वात°) — e) K2 transp च and पश्य — f) S हेमपट्ट(T1 °दंड)परिष्कृतां

28 a) K1 D1.5 धारयेयं K3 V1 B1 Dn1 D2–4 6 क्रूरत्वां (for क्रुद्धो) — b) M1 विकिरेयश्च (sic) — c)

शोषयेयं समुद्रांश्च तेजसा स्वेन पार्थिव ॥ २८
तन्मामेवंविधं जानन्समर्थमरिनिग्रहे ।
कस्माद्युनक्षि सारथ्ये न्यूनस्याधिरथेर्नृप ॥ २९
न नाम धुरि राजेन्द्र प्रयोक्तुं त्वमिहार्हसि ।
न हि पापीयसः श्रेयान्भूत्वा प्रेष्यत्वमुत्सहे ॥ ३०
यो ह्यभ्युपगतं प्रीत्या गरीयांसं वशे स्थितम् ।
वशे पापीयसो धत्ते तत्पापमधरोत्तरम् ॥ ३१
ब्राह्मणा ब्रह्मणा सृष्टा मुखात्क्षत्रमथोरसः ।
ऊरुभ्यामसृजद्वैश्याञ्शूद्रान्पद्भ्यामिति श्रुतिः ।
तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ॥ ३२
अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत ।
गोप्तारः संग्रहीतारो दातारः क्षत्रियाः स्मृताः ॥ ३३
याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः ।
लोकस्यानुग्रहार्थाय स्थापिता ब्रह्मणा भुवि ॥ ३४ C. 8. 1370 B. 8. 32. 46 K. 8. 23. 33

K₃ समुद्र° — d) S पातयेय च भास्कर

29 a) K₁ B₁.₂-₅ Da₁ Dn₁ D₁-₃ ₅ ₇ ₈ T₁.₃ G₁.₃ M त, B₂ वस्मात् (hypermetric), D₄ त्वं (for तन्) M₁ एवंविधा K₁.₃ V₁ B S (except T₁ M₂) राजन् (for जानन्) — b) Ś₁ अरिविग्रहे; K₁ परिनिग्रहे, B₂ पर° (for अरि°) — c) V₁ G₂ ₃ M₁ तस्माद्, B₁ असाद् V₁ प्रवक्षि; B₁.₃ D₂ युनक्ति, Dn₁ D₃ ₄ ₆ ₇ T₃ G M युनक्षि; T₁ यूनेहि (sic), T₂ नियुङ्क्षे (for युनक्षि) — d) V₁ B₁ (m as in text) ₅ D₂-₄ ₆ ₇ नीचस्य, Da₁ D₁ ₅ T₂ ₃ G M सूतस्य (for न्यूनस्य) T₂ ₃ G [अ]तिरथेर् K₁ स्तृत°, V₁ D₂ ₄ ₆ ₇ रणे, B₁.₄ Dn₁ D₂ T₂ रथे, B₃ ₃ ₄ m ₅ Da₁ D₁ ₅ ₈ मत°; T₃ G M तु मा (for नृप) K₂ सूतस्यापि रथे पुन°, T₁ सूतस्य योक्तुमिच्छसि — After 29, S ins

223* न चापि मम राधेय कलामर्हति षोडशीम्।
सकर्णा ये त्रयो लोकाः सार्जुना सजनार्दना।
नियुद्धास्तान्रणे राजन्न मुच्येय कथचन।
तथापि शक्तं कौरव्य विहाय हृदयेन माम्।
न चाह प्राकृत कश्चिन्न चाप्यधिगत स्वयम्। [5]

[(L. 1) G₂ त (for [अ]पि) G₃ नार्हति — (L 3) T₁.₂ M नाहं गाङ्गेय, G₁ राजन्न गणेय (for राजन्न मुच्येय) — (L 4) Om in T₃ G₁ शक्त°, G₂ M₁ शक्ति T₁ न चापि शक्ति कौरव्य, M₂-₄ तथा हि शक्ति कौरव्य (for the prior half) T₁ G₃ विषाद (for विहाय) G₁ M₂-₄ हृदये पुमान्, M₁ हृदयोगमान् (for °येन माम्) — (L 5) T₁ M₂-₄ चास्मि; T₃ G₁ M₁ चास्मि ]

T₃ G₂ cont.

224* अयं चाप्यनमानो मे न कर्तव्य कथचन।

30 S reads 30-38 after 20 — a) Ś₁ K₂ ना नाम धुरि, K₁ ₄ V₁ B₁.₂-₅ D न मामधुरि, K₃ न मा किं धुरि, B₂ न मामिदानीं; S न मामर्हसि (for न नाम धुरि) Ca c cite अधुरि — b) K₃ V₁ B D नियोक्तु S नियोक्तु कर्मणीदृशे — c) T₁ G₂ पापीयसे (G₂ °सि) V₁ श्रेयो — d) Da₁ D₁ ₅ कृत्वा (for भूत्वा) K₃ प्रेक्षत्वम् T₁ ₂ M प्रेष्यता कर्तुमर्हसि (T₁ M₁ ₃ ₄ °ति), T₃ G प्रेष्यत्व कर्तुमर्हति (G₁ ₃ °सि)

31 For sequence in S, cf. v 1 30 — a) Ś K₂ [अ]भ्युपगति (sic), B₁ [अ]भ्युपगतं; Dn₁ D₃ °पागत, G₂ °पेत मा (for °पगतं) D₆ रीत्या, D₈ S मित्र (for प्रीत्या) — b) T₁ M₁.₃ ₄ वरीयासं B₃ ₄ रणे स्थित, S विशेषतः — c) K₁ वशी, K₃ चक्रे (for वशे) K₃ T₁.₂ दत्ते; D₂ यत्ते (for धत्ते) G₂ विवशे पापमो यत्ते (sic) — d) T G कार्यम् (for पापम्) K₄ D₆ अधु(D₆ °ध)रोत्तम, Ca c अधरोत्तर (as in text)

32 For sequence in S, cf v 1. 30 — a) K₁ ब्रह्मणा ब्रह्मण°, K₃ ब्राह्मणो ब्रह्मणा, V₁ D₂ ₃.₆ ₇ M₂-₄ ब्रह्मणा ब्राह्मणा (by transp ), Dn₁ ब्राह्मणो ब्रह्मण°, T₁ M₁ ब्रह्मणो ब्राह्मणा. Dn₁ सृष्टो B Da₁ D₁ ₅ ब्रह्मासृज° न्मुखादि(B₃ ₂.₅ Da₁ D₅ °स्ते वि°, D₁ स्त वि)प्रान् — b) K₂ Dn₁ क्षत्ररथोरम (sic), K₃ °मनोरम°, D₃ ₄ ₇ क्षत्रं च बाहुत°, T₂ क्षत्र तयोरम (for क्षत्रमथोरस°) B Da₁ D₁ ₅ क्षत्रियानपि बाहुत — c) K₃ ₄ Dn₁ D₃ ऊरूभ्याम्, S अथ वैश्या (T₁ °श्यो) वै (for असृजद्वैश्यान्) — d) K₁ S शूद्रा (K₁ T₁ G₂ °द्र) B₂-₄ Da₁ D₁.₅ transp. शूद्रान् and पद्भ्याम् B₁.₃ ₅ Da₁ D₁.₅ स्थिति (for श्रुति) — e) K₃ ताभ्यां, B₂ तस्माद् (for तेभ्यो) K₂ वर्णविशेषाच, K₃ Dn₁ D₁ °विशेषाश्च Cc cites वर्णविशेषा (as in text) Cv as in text — f) K₃ °लोमत, Dn₁ °लोमजान् Cv as in text

33 For sequence in S, cf v 1 30 — a) S अन्योन्यस्य च (T₁ तु) संयोगाच् — b) K₁ चतुर्वर्ण्यस्य; K₂ ₄ D₁ T₁ G₁ M₁.₃ चातुर्वर्णस्य — c) N (except D₁) T G M₁ Ca.v संगृहीतारो, Ca c as in text — d) D₃ (before corr ) तथा (for स्मृता°)

34 For sequence in S, cf. v 1 30 — a) K₃ V₁ याजनाध्यापने (V₁ °ध्यायिनो), T₂ यजनाध्यपनैर्, G₂ यजनयाजनापनैर् (sic) T₃ युक्ता (for विप्रा) — b) K₃ विशुद्धिस्, G₂ शुद्धाश् (submetric) Cc विशुद्धैः (as in text) — d) G₁ स्थावरा, G₂ स्थापितं (sic) (for

C 8 1371 B 8 32.47 K 8 23 40 कृपिश्च पाशुपाल्यं च विशां दानं च सर्वशः ।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ॥ ३५
ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः ।
न विट्शूद्रस्य तत्रैव शृणु वाक्यं ममानघ ॥ ३६
सोऽहं मूर्धावसिक्तः सन्राजर्षिकुलसंभवः ।
महारथः समाख्यातः सेव्यः स्तव्यश्च बन्दिनाम् ३७
सोऽहमेतादृशो भूत्वा नेहारिकुलमर्दन ।
सूतपुत्रस्य संग्रामे सारथ्यं कर्तुमुत्सहे ॥ ३८
अवमानमहं प्राप्य न योत्स्यामि कथंचन ।
आपृच्छ्य त्वाद्य गान्धारे गमिष्यामि यथागतम् ३९
एवमुक्त्वा नरव्याघ्रः शल्यः समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ४०
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव ।
अब्रवीन्मधुरं वाक्यं साम सर्वार्थसाधकम् ॥ ४१
यथा शल्य त्वमात्थेदमेवमेतदसंशयम् ।
अभिप्रायस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ४२
न कर्णोऽभ्यधिकस्त्वत्तः शङ्के नैव कथंचन ।
न हि मद्रेश्वरो राजा कुर्याद्यदनृतं भवेत् ॥ ४३

---

स्थापिता) Some MSS ब्राह्मणा — After 34, B2 Da1 D1 5 ins

225* प्रजाना रक्षण दान युद्ध क्षत्रस्य निर्मितम्।

35 For sequence in S, cf v l. 30 — a) K4 कृष्यश्च, G2 ऋप्यश्च Ś2 K1 4 G1 2 M2–4 पशुपाल्यं च (K4 °ल्श्च, G2 °ल्यश्च); T1 पाशुपाल्यश्च — b) D5 तथा, Co विशां (as in text) G2 चैवात्र (for दान च) B3 सर्वशं, B4 D2–4 6 7 T1 3 G M धर्मत T2 विशां धर्मश्च कीर्तित — c) G1 ब्रह्मक्षत्रियविट्शूद्रा; M1 °क्षत्रविदां शूद्रा — d) Dn1 D4 परिवारका, D2 T1 °चारिका

36 T1 om 36 For sequence in S, cf v, l. 30 Ś K1–3 Dn1 D2 om. (hapl ) 36ab — a) D6 तथा (for ब्रह्म-) V1 B Da1 D1, 5 3 तथा वै क्षत्रियाणां च — b) B2 शूद्रा (for सूता) D8 हि; T2 3 G च; M तु (for वै) D4 परिवारका, T2 °वेपका — K4 reads 36cd twice (with v l ) — c) K3 यच्चैव, S (T1 om.) सयोग (for तत्रैव) K4 (first time) V1 B Da1 Dn1 D1 3–8 न क्षत्रियो (V1 Da1 Dn1 D1 5 6 8 °या) वै सूताना — d) T2 3 G3 M चान्यन्, G1 चान्य, G2 वान्य (for वाक्य) K4 (first time) D5 6 7 शृणुयाश्च (D6 °स्त्वं) कथंचन, Dn1 शृणु चेदं वचो मम

37 For sequence in S, cf v l 30. — a) B Da1 D1 2 5 T2 3 G M1 Co मूर्धाभिषिक्त (for °वसिक्त) B1 Da1 D1 5 T1 च; B3–5 D3 हि (for सन्) V1 D3 4 6 7 अह मूर्धाभिषिक्तो हि (D6 °क्तोसि) — b) V1 D2–4 6 7 S राजर्षिकुलजो नृप (D3 4 6.7 T1 3 G1 3 °प) — c) Ś2 D7 T3 G M महारथ- (for महारथ ) — d) K3 Dn1 T2 G1 M1, 2 4 सेव्य-, D3 श्रेष्ठ Ś1 K4 शुद्धश्च; V1 B2 3 Dn1 D2–4 6 7 स्तुत्यश्च (for स्तव्यश्च) Ś2 मदिनां, K2 वर्दिनां, T2 वदिन G2 तप्यस्तप्याश्च वादिनः

38 For sequence in S, cf v. l 30 — b) Ś G2 नेहारिकुलमर्दन; K1 B Da1 D1 5 7 नेहा(Da1 D1 °त्रा)रियलसूदन (K1 B D5 °न), K3 V1 Dn1 D2, 6 T1 M नेहारिबलमर्दन (V1 D6 M1 °न); D8 नैवारिकुलमर्दन — c) K3 स च सूतस्य (for सूतपुत्रस्य) — d) Ś2 सारथं

39 T3 G3 om. 39ab — a) S (T3 G3 om ) अयं (G2 कथं) चाप्यवमानो मे — b) S (T3 G3 om.) कर्तव्य (for योत्स्यामि) — c) K1 3 V1 B D (except D6) S आपृच्छे K1 त्वाधि, V1 D6 वाद्य, T3 G3 त्वद्य — d) B Da1 Dn1 D1–5 7 8 गृहाय वै (for यथागतम्) V1 D6 प्रयास्यामि गृहानित (D6 ग्रहाणि व), S यास्यामि विषयं प्रति — After 39, S ins

226* न चाह सूतपुत्रस्य सारथ्यमुपजग्मिवान्।

40 Before 40, all MSS. (except Ś K1, 2) ins. सजय (B5 सूत) उवाच — c) V1 B2–4 D2–4 6 7 S महाराज (for नरव्याघ्र) — d) T2 असमर्षत

41 a) K1, 4 बहुमाना(K4 °न)श्च Co cites बहुमानाद् (as in text) — b) T1 परिगृह्य; T2 3 G M स (T2 स-) नि° (for तं नि°) — c) K3 स पुनर् (for मधुर) — d) V1 B Dn1 D3 4 6 7 S Co साम्ना; D2 सांत्वं (for साम) Da1 D1 5 सांत्वपूर्वार्थसाधकम्

42 a) G1 यदा (for यथा) V1 B1 Dn1 D2–4 6 7 विजानीषे, B2–5 त्वमात्थेत्थम्, M3 त्वमाथेदम् (sic) (for °त्थेदम्) — b) T1 एव (for एतद्) Da1 D1 5 S न सशय (M3 °य) — c) B2 D2 6 8 च (for तु) — d) K4 जनेश्वर, T2 नरेश्वर, G2 ममेश्वर

43 b) V1 B1, 3–5 Da1 Dn1 D1, 3–7 न शंके (Dn1 °से) त्वां च (B1, 4 त्वार्य-) पार्थिव, S न चान्ये चैव (T1 तापि [sic ], T3 G3 नैव, G2 चै न; M2 चै हि) पार्थिवा. — c) T2 च (for हि) S (except T2) न च मद्रेश्वर त्वां (M1 त्व) हि — d) K3 D3 ब्रूयाद् (for कुर्याद्) S (except T2) कर्ण सोढु न (T2 G2 3 च) शक्ष्यति (M2–4 °त)

ऋतमेव हि पूर्वास्ते वहन्ति पुरुषोत्तमाः ।
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ ४४
शल्यभूतश्च शत्रूणां यस्मात्त्वं भुवि मानद ।
तस्माच्छल्येति ते नाम कथ्यते पृथिवीपते ॥ ४५
यदेव व्याहृतं पूर्वं भवता भूरिदक्षिण ।
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यसे ॥ ४६
न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान् ।
वृणीमस्त्वां हयाग्र्याणां यन्तारमिति संयुगे ॥ ४७
यथा ह्यभ्यधिकं कर्णं गुणैस्तात धनंजयात् ।
वासुदेवादपि त्वां च लोकोऽयमिति मन्यते ॥ ४८
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ ।
भवानप्यधिकः कृष्णादश्वयाने बले तथा ॥ ४९
यथाश्वहृदयं वेद वासुदेवो महामनाः ।
द्विगुणं त्वं तथा वेत्थ मद्रराज न संशयः ॥ ५०

शल्य उवाच ।

यन्मा ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ ५१
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ ५२
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य संनिधौ ॥ ५३ C 8 1220 B 8 32. 65 K 8. 23 71

---

44 a) K3 Dn1 D1 कृतम्; D2 सत्यम्, T1 यतम्; G3 श्रुतम्; M3 हुतम्, Cc ऋतम् (as in text) Ś1 B2 पूर्वे ते; K4 V1 B1 D2 T1 2 G2 M पूर्व ते, Dn1 पूज्यास्ते, T3 G1.3 पूर्ण ते (for पूर्वास्ते) Ca.c cite पूर्वा (as in text) — b) K3 V1 B D वदति (for वहन्ति) T G2 3 M वच पुरुषसत्तम; G1 वर्त राजर्षिसत्तम — After 44ab, G1 ins 227* ज्ञातमेव हि पूर्वं ते वर्त्म राजर्षिसत्तम। — c) Ś1 K4 आर्तायणि; Da1 आर्तायानि, T1 °यन°, T2 आत्मायनि°, Ca c आर्ता° (as in text)

45 a) V1 B1 3 5 Dn1 D2 4 6-8 S तु (for च) K3 शल्य सदैश्च शत्रूणा — b) Dn1 यतस् (for यस्मात्) K3 त्वां, D3 च (for त्वं) V1 B2 3 D2-4 6 7 युधि (for भुवि) K1 4 मानद — c) Ś1 B (except B3) D2-4 7 शल्यो हि, K3 शल्येन (for शल्येति) M1 मे (for ते) — d) V1 B D (except D8) पृथिवीतले

46 a) V1 तद् (for यद्) Ś1 K3 V1 D2-4.6 7 T1 2 M एतद्, K4 पूर्व (for एव) D5 यदि वा व्याकृत पूर्वं, T2 G यत्तु सव्याहृत पूर्व — b) K1.3 D1 T1 G2 M1 भूरिदक्षिणा (K1 °णे; K4 M1 °ण) — d) Da1 D1 8 मदर्थे, G2 तदर्थं D8 यदि, T1 यत्तद् (for यद्यद्) K4 B1-3 5 Da1 Dn1 D1.4 5 8 S उच्यते, D2 मन्यसे (for उच्यसे)

47 a) Dn1 न हि, D3 गुणैस् (for न च) D8 न, T1 [ऽ]पि (for हि) — b) D8 [अ]यमिति (for [अ]हमपि) — c) K3 गृणीमस्, V1 B3 4m Dn1 D2-4 7 वृणेहं; Cc वृणीमस् (as in text) G1 श्रीग्गिमत्वा (sic) M त्वा K3 D1-3 6 ह(D2 ज)याग्राणा — d) V1 B D2-4 6 7 S इह, Da1 D1.5 अपि (for इति)

48 a) K3 B Da1 D1.5 8 यथा ह्यस्य(B1 2 °व)धिकः कर्णो (K3 पार्थात्), V1 Dn1 D2-4 6 7 मन्ये था(D3 वा)-

स्यधिक शल्य — b) Dn1 सदा (for गुणैस्) V1 B4 Dn1 D2-4 6 7 कर्ण (for तात)

☞ B3 damaged for the portion from 8 23 48cd up to 8 24 102

— c) T3 G1 M अति, G3 इति (for अपि) K3 Da1 D1.5.8 त्व (for त्वां) V1 D2-4 6 7 भवत वासुदेवाच्च, G3 पादाति त्वं च *** — d) T1 अपि (for इति)

49 B3 damaged — a) K1 अप्यधिक, D3 त्वस्य°; D8 ह्यप्य° (for ह्यभ्य°) — b) T1.3 G M सर्वास्त्रे(G3 °र्थे)-षु, T2 शस्त्रास्त्रेषु (for अस्त्रैरेव) K3 4 G1 नरर्षभ — c) K1 3 V1 B (B3 damaged) D (except D8) S ह्यभ्यधिकः — d) V1 B (B3 damaged) D अश्वज्ञाने V1 बलेन च, B1 4 5 Da1 D1.5 तथा बले (by transp )

50 B3 damaged — c) Ś1 तु; K1 ते; V1 T1.3 G तु; D8 तद् (for त्व) B1 2 4 5 D2-4 7 8 वेत्सि; Dn1 M वेद, D1 वित्थ (for वेत्थ) — d) G3 मद्रराजा Ś K V1 B3 D2-4 7 8 मद्रराजेश्वरात्मज (Ś1 °न; K3.4 °ज); Dn1 °राजो धनाधिप

51 B3 damaged — a) K1 3.4 B (B3 damaged) D (except D1) T G1.3 M1 यन्मा, G2 तन्मां (for यन्मा) — b) K4 कौरव, T3 G मारिष — d) S अस्म्य(G3 °प्य)-तस् (for अस्म्यह) Ś K1 2 4 तव (for त्वयि)

52 B3 damaged — a) K3 एक, T3 अह (for एष) — c) M1 युध्यत (for युध्यत) K1 पाण्डवाग्र्याणां, V1 D3 G1 °वाग्रेण, T2 °वेयेन, G3 °वेयस्य (for °वाग्र्येण) — K3 lacuna from -ग्र्येण up to वाचो (in 53d) — d) S य(G3 न)त्त्व मा (for यथा त्व)

53 B3 damaged. K3 lacuna (cf v l. 52) — a) T3 G2 3 तदल, Ca c समयश्च (as in text) T1

C 8 1290 B 8. 22 66 K 8 23 72 संजय उवाच ।
तथेति राजन्पुत्रस्ते सह कर्णेन भारत ।
अब्रवीन्मद्रराजस्य सुतं भरतसत्तम ॥ ५४

इति श्रीमहाभारते कर्णपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

# २४

दुर्योधन उवाच ।
भूय एव तु मद्रेश यत्ते वक्ष्यामि तच्छृणु ।
यथा पुरा वृत्तमिदं युद्धे देवासुरे विभो ॥ १
यदुक्तवान्पितुर्मह्यं मार्कण्डेयो महानृषिः ।
तदशेषेण ब्रुवतो मम राजर्षिसत्तम ।
त्वं निबोध न चाप्यत्र कर्तव्या ते विचारणा ॥ २
देवानामसुराणां च महानासीत्समागमः ।
बभूव प्रथमो राजन्संग्रामस्तारकामयः ।
निर्जिताश्च तदा दैत्या दैवतैरिति नः श्रुतम् ॥ ३
निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः ।

---

G1 M त्वयि कौरव्य, T2 3 G2 3 त्व(T3 त्व)स्ति कौरव्य (for च हि मे वीर) — b) G2 कश्चिद् — c) T1 यथाकुद्धम्, T2 °श्राव्यम्, Ca °श्रद्धम् (as in text) Dn1 अश्रद्धेय भयाच्योन्या (sic) — d) Da1 D1.5 वाचा K1 संविधौ Dn1 अन्येनार्जुनसंनिधौ

54 B3 damaged K3 Dn1 T2 om. the ref — a) T2 राजपुत्रस् — b) Ś transp सह and कर्णेन B1 T1 M1 मारिप, M2–4 वीर्यवान् (for भारत) — c) V1 यद्ब्रवीन् (sic) S (except T2) मद्रराजं च (for °राजस्य) — d) K3 सुतो, B1.5 D2–4 7 मतं (for सुतं) K1 D6 भारतसत्तम S (except T2) सुतस्ते भरतर्षभ.

Colophon damaged in B3 — *Day of Karṇa's Generalship* Ś1 द्वितीययुद्धदिवसे — *Adhy. name* Dn1 दुर्योधनवाक्यं, T1 2 शल्यसारथ्या(T1 °थ्य)भ्युपगमं (T2 °म), M1 °सारथ्यभ्युपम — *Adhy no* (figures, words or both) Ś1 T1 3 G M 23 (as in text), B1.2 D3 32, D1 26, D4 (*sec m*) 6 33, T2 25

## 24

☞ The portion of the text from st. 8 24 1 up to 8 24 102 is damaged in B3 (cf. v 1 8 23 48), the MS is mostly ignored in the sequel up to 102

1 a) K1 मद्रेय (for मद्रेश) — b) B1 Da1 Dn1 D1 5 8 T1 2 यत्त्वां; T3 G1 3 M यत्वा, G2 यस्त्वां (for यत्ते) K1 यमुवेक्ष्यामि (sic) (for यत्ते वक्ष्यामि) — c) T1 कृतम् (for वृत्तम्) — d) B (B3 damaged) Dn1 D2 5 8 S प्रभो, D6 विभो (for विभो)

2 b) Ś K1 2 मार्कंडेयो S महातपा. (for °नृषि°) — e) Dn1 अशेष॰ (for अशेषेण) Dn1 वदतो (for ब्रुवतो) S ब्रुवतस्त्वद(T1 °स्त्वद्वि-, G1 °स्तव)शेषेण — d) T2 मया (for मम) K3 4 राजर्षिसत्तम — e) K3 B1 2 4 तन् (for त्वं) V1 B5 D2–4 6 7 S निबोध मनसा चात्र (D6 राजन्) — f) V1 B5 D2–4 6 7 S न ते कार्या (G2 चेत्कार्य-) विचारणा Co cites विचारणा — After 2, S ins

228* समुत्पन्ना हि राजान प्रमोह इति निश्चय ।
कृत्वा चैव व्यवस्यन्ति सर्वे धर्मार्थनिश्चयान् ।

[(L. 1) T1 समुत्पन्नो T1 राजानं — (L 2) M1 श्रुत्वा (for कृत्वा) T1 M न ये, T2 न चेद् (for चैव) T1 धर्मार्थनिश्चयात् ]

3 b) V1 B5 Dn1 D3 4.6 7 परस्परजिगीषया; B1.2 4 Da1 D1 2 5 8 परस्परजयैषिणां, S महानासीत्समुच्छ्रयः (T1 °श्रय) — After 3ab, S ins

229* सैंहिकेयास्तदोद्वृत्ता विबुधानवसूदयन् ।
ते निरस्ता कृता देवैर्दानवा बलगर्विता ।

[(L. 1) T1 ततो वृत्ता (for तदोद्वृत्ता) T2 सैंहिकेयस्ततो द्दस (for the prior half) T1 M विबुधानवधूनयन्, G2 विमोध नवसूदयन् (sic) (for the posterior half) ]

— For 3c–4d, Ś K subst 231* — c) S तत्रासीत् (for बभूव) B1 2 Da1 D1 5 परमो (for प्रथमो) — d) D2 तारकामये, G1 °कायम (sic) — Dn1 om. 3ef. — e) B5 अर्दिता°, Da1 D1 5 मर्दिता° (for निर्जिता°) T1.2 तथा; T3 G ततो (for तदा) D6 om. दैत्या — f) Da1 D1 5 देवानाम् (for दैवतैर्) G1 2 M1 न (for न॰) T3 G श्रुति॰ (for श्रुतम्) T2 दैवैरिति च न श्रुत — After 3, S ins

230* भग्नदर्पा निरुत्साहा पाताल विविशुस्तदा ।
[G1 भग्नदर्गा ]

ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ ४
तप उग्रं समास्थाय नियमे परमे स्थिताः ।
तपसा कर्शयामासुर्देहान्स्वाञ्शत्रुतापन ॥ ५
दमेन तपसा चैव नियमेन च पार्थिव ।
तेषां पितामहः प्रीतो वरदः प्रददौ वरान् ॥ ६
अवध्यत्वं च ते राजन्सर्वभूतेषु सर्वदा ।
सहिता वरयामासुः सर्वलोकपितामहम् ॥ ७

तानब्रवीत्तदा देवो लोकानां प्रभुरीश्वरः ।
नास्ति सर्वामरत्वं हि निवर्तध्वमतोऽसुराः ।
वरमन्यं वृणीध्वं वै यादृशं संप्ररोचते ॥ ८
ततस्ते सहिता राजन्संप्रधार्यासकृद्बहु ।
सर्वलोकेश्वरं वाक्यं प्रणम्यैनमथाब्रुवन् ॥ ९
अस्माकं त्वं वरं देव प्रयच्छेमं पितामह ।
वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् । C 8 1402 B 8 33 12 K 8 24 15

---

4 a) Da1 D5 T2 om. च M तु (for च) Da1 D1.5 मैन्येषु (for दैत्येषु) T8 G निर्जितेष्वसुरेष्वेषु — c) V1 D2 तारकाक्ष कमलाक्षो; Dn1 कमलाक्षस्तारकाक्षो, S विद्युन्माली तारकाक्ष — d) T G1 2 M कमलाक्षश्च (T2 °क्षोय), G2 नरकाक्षश्च (for विद्युन्माली च) T1 M वीर्यवान् (for पार्थिव) — After 4, Dn1 D2 ins Ś K subst. 3e–4d

231* कश्चिद्यजापतिर्घोरस्तेन सार्धं महात्मना।
युद्धमासीन्महाघोरं दैवतैर्न इति श्रुतिः।
पराजनृवुरसुरा दानवैः सह सयुगे।
देवैर्निरस्ता ह्यसुरा नि:श्वसामर्पितास्तत ।

[K2 om. line 1 — (L. 1) Dn1 पूर्वं (for कश्चिद्) Cv as in text Dn1 D2 Cv दुरात्मना (for महा°) — (L. 2) K1.2.4 Dn1 D2 श्रुत (for श्रुतिः) Cv देवानामिति न श्रुत (for the posterior half) — (L. 3) Dn1 D2 दैवतै° (for दानवै) — (L. 4) Ś K1 2 देवैर्निरस्तानसुरान् (for the prior half) K4 नदा (for नन°) Ś K1 2 निरस्या नर्मितोदय (K1 °नय, K2 °नय), K8 निश्वस्ता मर्दितास्तत (for the posterior half)]

5 a) T2 त्रय (for उग्रं) Ś K1.2 4 समादाय, D8 °धाय — b) B1.4 Da1 D1.5 M2–4 परमे नियमे (by transp) Ś K1.2 स्थित D8 T8 G नियम परमास्थिता — c) Some MSS कर्शयामासुद्, K1 कीर्णं — d) K2 4 देवास्ते, V1 B1.5 Da1 Dn1 D1.5 6 8 देहास्ते (for देहान्स्वान्) V1 Dn1 D2 शत्रुतापना, D3 °नादान, T1 M °कर्शन, T2 G2 °कर्शना, T3 G1 3 °कर्शिन

6 a) T2 मदेन (for दमेन) — b) V1 B1 (m as in text) D2–4 6 7 ममाधिना (for च पार्थिव) — d) K2 4 V1 B2 1 D2–5.6 7 S वर (for वरान्)

7 a) B2 महा, M2 च मे (for च ते) S सर्वे (for राजन्) — b) V1 B1 D2–4 6 7 सर्वभूतस्य Dn1 सर्वद° — c) Ś1 K1 2 वर्तयामासु, Ś2 T3 G2 3 वारयामासु

8 a) Dn1 ततो (for तदा) — b) S सर्वलोकगुरु प्रभु (M1 °रं प्रभु) — c) K8 V1 Dn1 D1 6 T2 3 G हि (for वै) — d) K8 विवर्तध्व; G3 न वर्तध्वम् (for निवर्त°) K8 V1 Dn1 D2 4 6 महासुरा, B (B3 damaged) D3 7 T2 3 G इतोसुरा (for अतोऽसुरा) — e) K1.3 V1 B1 2 4.5 D S transp वर and अन्यं K1 वृणीध्वेव (sic) — f) Ś1 K1 2 4 Da1 Dn1 D1 5 6 8 यादृश Ś K2 4 B2 Dn1 D8 सप्रवर्तते (for °रोचते) K3 यूयमिच्छत यादृश, S रोचते यादृशो (G3 यादृशो रोचते) हि व

9 K3 om. 9 — b) T2 G2 सप्रसाद्य (for संप्रधार्य) D1.6 G2 सकृद् (for [अ]सकृद्) Ś1 K4 गुरुं, Ś2 K1.2 (by corr sec m) गुरु; K2 (before corr) वहु, B2 D2–4 7 G2 प्रभुं, Da1 D1.5 वर, D8 T1 यहु (for बहु). B2 सम्प्रधार्य यथाथवा, D3 °र्य मुहुर्मुहु Co cites सम्प्रधार्य (as in text) — c) Dn1 देव (for वाक्य) V1 B1.4 D प्रणम्येदम् (for °म्यैनम्) B2 यथा (for अथ) G1 [अ]ब्रवीत् (for [अ]ब्रुवन्) — After 9, S ins

232* वयमिच्छाम नगर कर्तुं कामगम शुभम्।
सर्वकामसमृद्धार्थमवध्य देवदानवै ।
यक्षरक्षोरगगणैर्नानाजातिभिरेव च।
न कृत्याभिर्न शस्त्रैश्च न शापैर्ब्रह्मवादिनाम्।
वध्येत त्रिपुर देवं प्रसन्ने त्वयि सादरम्। [5]

[(L. 1) T3 G2 वन्तुन्, M1 कर्तुर्, M2–4 पृथग् (for वयन्) T1 M2–4 विभो (for शुभम्) — (L. 2) T1 सर्व लोकसमृद्ध्यर्थन्, M3 °काममनृद्ध्यर्थम् — (L. 3) G2 वा (for च) — (L. 5) Om in G2 T2 देवेन (sic), T3 G3 अवध्य (for वध्येत) T1 वध्य पुरत्रय देव (for the prior half) T2 सामरं, G1 M2 मातुर (for सादरम्)]

10 T3 G2 om 10ab — a) B2 D2 4 अस्मम्यं; D3 7 M1 अस्मभ्यम् (for अस्माक) Ś2 तु (for त्व) D8 वीर (for देव) G2 मध्ये तत्त्रिपुर देव — b) K3 प्रयच्छसे, D2–4 7 संप्रयच्छ, T2 प्रयच्छैनं, G1 °च्छेत, G3 °च्छैवत् (for °च्छेम) — d) K4 पितामह (for महीमिमाम्) — e) K4 Da1 D1.5 विचरिष्यामि S लोकेश (T3 G2 3 °ष्) (for लोकेऽस्मिन्) — f) Da1 D1.5 T3 G3 त्वत्प्रसादात्पुरस्कृता (T3 G3 °रस्थिता)

C 8 1402 D 8 33 12 K 8 24 15 विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः ॥ १०
ततो वर्षसहस्रे तु समेष्यामः परस्परम् ।
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ ॥ ११
समागतानि चैतानि यो हन्याद्भगवंस्तदा ।
एकेषुणा देववरः स नो मृत्युर्भविष्यति ।
एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम् ॥१२
ते तु लब्धवराः प्रीताः संप्रधार्य परस्परम् ।
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरम् ।
विश्वकर्माणमजरं दैत्यदानवपूजितम् ॥ १३
ततो मयः स्वतपसा चक्रे धीमान्पुराणि ह ।
त्रीणि काञ्चनमेकं तु रौप्यं कार्ष्णायसं तथा ॥ १४
काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम् ।
आयसं चाभवद्भूमौ चक्रस्थं पृथिवीपते ॥ १५
एकैकं योजनशतं विस्तारायामसंमितम् ।
गृहाट्टाट्टालकयुतं बृहत्प्राकारतोरणम् ॥ १६
गुणप्रसवसंबाधमसंबाधमनामयम् ।
प्रासादैर्विविधैश्चैव द्वारैश्चाप्युपशोभितम् ॥ १७
पुरेषु चाभवन्राजन्राजानो वै पृथक्पृथक् ।

---

11 a) T G2.3 M1 यया; G1 तया, M2-4 पूर्णे (for ततो) B2 वर्षसहस्रांते; D4 T G M1 °सहस्रेषु — b) K3 समेष्याम — After $11^{ab}$, S ins

233 * ब्रह्मोवाच ।
विलय समयस्यान्ते मरणं जीवितस्य च ।
इति चिन्त्य वधोपाय कंचिदेव निशामय ।

[ (L. 1) T1 M1 समयस्यातो T3 विलयं समयास्यते, G3 विलायार्जीवितस्यांते (sic) (for the prior half) M2-4 वा (for च) — (L. 2) T1 3 G1 M2-4 चित्त, M1 चैव (for चिन्त्य) T2 तयोपाय (for वधो°) T1 G3 M किंचिदेव T1.3 G1.3 निशामये, G2 °मया, M1 °मय°, M2 निशम्यतां, M3 4 निशाम्यतां (for °मय) ]

Before $11^{c}$, S ins असुरा (T2 दैत्या) — c) D3 एक भावं; T1 एकीमागं (for एकीभावं) G2 गमिष्यामि

12 a) D3 यमागतानि B1 5 Da1 D1.5 चैकस्थं (for चैतानि) — b) Ś1 K1.2 4 D4.8 M4 भगवांस् (for भगवस्) S नर (for तदा) — c) S देवो वा (T2 °व्यो वा; T3 G2 3 °वोपि) द्विपदा श्रेष्ठ (G1.2 M1.3 °ष्ठ) — d) K3 V1 B1.4 Da1 D1 5 6.8 भवेदिति (D1 °धदि) — After $12^{cd}$, S ins

234* तेषां तद्वचनं श्रुत्वा दानवानां महायशाः ।

— e) Da1 एकम् (for एवम्) — f) Ś2 K1 4 प्रविशत् B2 गिरिं (for दिवम्)

13 a) K1 तत्ते, Da1 ते नु; G2 तेन (for ते तु) D2 3 लब्ध्वा (for लब्ध-) D1 om प्रीता K4 पीना (for प्रीता) — c) T2 पुरस् (for पुर-). Ś2 °विसृष्टार्थं — d) T1 वर (for मय) K1 ब्रुवन्, K3 जग्मुर् (for वव्रुर्) Da1 D1.5 8 T1 2(*sup lin*) 3 G M1 महासुरा ; T2 महायशा (for °सुरम्) — e) D6 अजयं, G2 अजितं (for अजर)

14 G2 om. (hapl.) $14^{a}$–$15^{b}$ — a) B1 2 4 D3 7 8 सुतपसा — b) K1 चक्रु (sic) T1.2 G1 M1.3 वीर; T3 G3 M2 4 धीर (for धीमान्) B2 5 D3 4 7 च, D2 3 हि; S (G2 om.) [अ]थ (for ह) — c) V1 B1 2 4.5 D (except Dn1 D3) S (G2 om.) वै (for तु) — d) Ś2 Da1 D1 5 6 रौप्यं- (for रौप्य). Dn1 कालायस, T1 कृष्णायसं, G1 कार्ष्णं° (for कार्ष्णा°). T1 तदा (for तथा)

15 G2 om. $15^{ab}$ (cf. v. l. 14) — a) K3 कांचन हि विनत्रासीद् (sic) — b) D1 राजते (for राजतम्) T1 दक्षरिक्षे च राजितम् (sic) — c) Da1 D1 5 आयस्य (for आयस) G2 [अ]पतद् (for [अ]भवद्) Ś K1 2 4 V1 B (B3 damaged) D (except D3) T1 Co भौमं (for भूमौ) — d) V1 चक्रुस्तं, Dn2 चक्रुस्ते; D7 Cnp तृतीयं, Ca c चक्रस्थं (as in text) V1 Da1 Dn1 D1 2 5 पृथिवीतले (for °पते) S (except T1) तदा (T2 °था) तेषां परंतप.

16 b) D3 °सवृतं (for °संमितम्) K1 विस्तारय सम स्थितं (sic), K3 V1 B2 Dn1 D2-4 6 7 °रायामत समं, B5 °र यतसंमितं; S विस्तृतं तावदायतं (G2 दानवायुत) Co cites संमित (as in text) — c) K3 अट्टाट्टालकसंयुक्तं, V1 B1 2.4 D गृहा(Da1 D1.5 शृंगा)ट्टालकसंयुक्त, B5 शृंगाट्टालकसयुक्त, S दृढं चाट्टालकयुतं Ca cites गृहाट्टालं; Co शृंगाणि and अट्टालक — d) V1 B (B3 damaged) D2-4 6 7 बहु- (for बृहत्-)

17 a) K4 V1 B2-5 D S Ca गृह(D3 गुण-, G1 बृहत्) प्रव(D2 °का)रसबाधम् Co cites गुणप्रचर — b) K3 om from अनामयम् up to वै (in $18^{b}$) K1 4 B (B3 damaged) Da1 Dn1 D1 2 5-8 T1 3 G M असबाधमहापथं (K1 °ग), V1 T2 °बाधं महारथ, D3.4 °बाध इवापर Ca cites असबाध — c) T3 G विमलैश् (for विविधैश्) V1 B1.4 Dn1 D2-4 7 T1 चापि (for चैव) — d) D1 om द्वारै T2 om च V1 D2-4 6 7 चैव (for चापि)

18 K3 om up to वै (cf. v. l. 17) — a) Dn1 D3

काञ्चनं तारकाक्षस्य चित्रमासीन्महात्मनः ।
राजतं कमलाक्षस्य विद्युन्मालिन आयसम् ॥ १८
त्रयस्ते दैत्यराजानस्त्रीँल्लोकानाशु तेजसा ।
आक्रम्य तस्थुर्वर्षाणां पूगान्नाम प्रजापतिः ॥ १९
तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च ।
कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः ।
महदैश्वर्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः ॥ २०
सर्वेषां च पुनस्तेषां सर्वयोगवहो मयः ।
तमाश्रित्य हि ते सर्वे अवर्तन्ताकुतोभयाः ॥ २१

यो हि यं मनसा कामं दध्यौ त्रिपुरसंश्रयः ।
तस्मै कामं मयस्तं तं विदधे मायया तदा ॥ २२
तारकाक्षसुतश्चासीद्धरिर्नाम महाबलः ।
तपस्तेपे परमकं येनातुष्यत्पितामहः ॥ २३
स तुष्टमवृणोद्देवं वापी भवतु नः पुरे ।
शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः ॥ २४
स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः ।
ससृजे तत्र वापीं तां मृतानां जीवनीं प्रभो ॥ २५
येन रूपेण दैत्यस्तु येन वेषेण चैव ह । C 8 1420 B 8 33 20 F 8 24 24

---

वा (for च) Ś V1 B1 Da1 Dn1 D1 4 [अ]भवद् (for [अ]भवन्) S त्रिपुर (T2 पुरेषु) तेषु चाप्यासन् — b) V1 D2 राजा चैव (for राजानो चै) B वा (for चै) D5 om one पृथक् — After 18ab, S ins

235* दिव्यनाम्न्यायसतरा दैवेया राजमत्तम ।

— c) Ś2 तारकाप्यस्य, K1 3 Dn1 G2 °काप्यस्य — d) S दिव्यम् (for चित्रम्) B1 विद्यां पते (for महात्मनः) — e) K1 3 Dn1 कमलाप्यस्य, G2 कनकाप्यस्य — f) S विद्युन्मालेस्त्वायसम्

19 a) M2 त्रयश्च K1 दैत्यराजाना V1 B1 3 D2–4 6 7 अक्र-, Dn1 दक्र-, D2 अपि (for आशु) — c) K3 Dn1 D2 S दुर्वर्षा; V1 B (B3 damaged) Da1 D1–7 ऋतुश्च (for वर्षाणां) — K4 om. (hapl) 19d–20e — d) Ś1 K2 ** नाम, K1.3 V1 B (B3 damaged) Da1 D1–7 T2 3 GM कश्च नाम, D3 कश्चनाम् (for पूगान्नाम) Dn1 कश्चिच्चानि प्रवर्तते, T1 वन्दानाम्प्रजापते

20 K4 om 20ab (cf. v. l. 19) — a) S तेषु (for तेषां) — b) Ś2 K1 प्रयुतान्युधुंधानि च — c) S कोटय-श्चापि (T2 3 G2 3 °श्चान्य) प्रयोगगा — d) S समतत (for ततस्तत) — After 20cd, N T2 ins

236* मायागता युद्धाश्च सुरैर्यनिहतान्यथा ।
[K3 4 मायाज्ञता, V1 B2 D2–4.6 7 मायाविन ; B1.4 6 Da1 D1 5 °दग्ध B2 Da1 D1.2 6 युद्धनाश्च, D5 °ध्याश्च V1 B (B3 damaged) D पुरा (for सुरै) ]

— e) B1.2 4 Da1 D1 इच्छन्ति (for इच्छन्तम्) — f) K3 B1 Dn1 G1 2 M1 धाश्रिता (for माश्रिता)

21 a) V1 B. D2–4 6 7 येषा (for तेषा) — b) Ś2 सर्वयोगमहो, K1 °योगवहा, B2 D2 °योगमयो, G2 °योगावहो (for °योगवहो) B. सर्वयोगमहोदय ⁂Cc महोदय इति वा पाठः।⁂ — c) V1 समाश्रित्य; B1 4 (marg. as in text) Da1 D1.6 M2–4 समाश्रित्य, D2 तमाहित्य (for तमाश्रित्य) Da1 D1.6 सर्वे (for सर्वे) — d) K3 B (B3 damaged) Dn1 D3 4 7 वर्तयंते (Dn1 D4 °तो), Da1 D1 2.6 8 S वर्तयति (for अवर्तन्त) K1 [अ]कुतोभय, Ca °भया (as in text) V1 [ऽ]वर्तत अकुतोभया

22 a) V1 B (B3 damaged) D2–4 7 G2 M2–4 यन् (for य) — b) V1 B1 Da1 D1.2–. Ca दध्यात्, B. दध्यासु (for दध्यौ) K3 °समत, D3 (before corr.) °सश्रयात् T2 3 G1 3 °मश्रित (for °संश्रय) — c) K1 कामो, S त(M2 क)स्मै (for काम) B2 D2 त तु, D3 ताव, T2 तत्र (for त त) — d) T1 तथा (for तदा)

23 a) B2 तारकाख्य° (for °काक्ष°) V1 D6 त्वासीत्, B (B3 damaged) Da1 Dn1 D1–. 7 8 वीरो (for चासीद्) — b) K3 वटो, Da1 (before corr.) हनिर्, Dn1 हुहुर् (for हरिर्) Da1 D1 6 T2 महासुर (for °बल) — c) T2 तु परम (for परमक) — d) S तेन (for येन) Ś2 [अ]-तृप्यत् (for [अ]तुष्यत्) K4 पितामह

24 Ś K1 2 om (? hapl) 24 — a) K4 V1 B (B3 damaged) Da1 D1–3 5 8 T1 G2 स-, D4 त (for स) G2 दैव (for देव) — b) B4 मे (for न) Da1 D1 6 तुरे, D3 पुर, G2 प्रभो (for पुरे) — c) Dn1 येत्र (for यत्र)

25 a) V1 त (for तु) Dn1 लब्धवरो (for लब्ध्वा वर) V1 D1 8 वीर (for वीरस्) — b) T1 [ऽ]सुर (for हरि) — c) D3 तां वापीं (by transp.) — d) V1 Da1 D1.5 S मृतसंजीवनी (D1 °वन, T1 G1 °विनीं) (for मृतानां जीवनीं) Ś1 K3 B1.. D2 7 जीविनीं V1 विभो, S प्रभु (for प्रभो) — After 25, S ins

237* पूर्णा दिव्यस्य तोयस्य पीयूषप्रतिमस्य वै ।

26 a) Ś2 रूपेन, K3 वेषेग, B2 दर्पेण (for रूपेण) K3 दैत्यश्च, B4 Da1 D1.6 दैत्यास्तु, S यो (T2 G2 वै) दैत्यो — b) ŚK1 2 4 B1 D2 4 वेशेन, K3 Da1 D1 3 T3 G2 3 रूपेण, B2 वेगेन (for वेषेण) V1 B2 Dn1 D1 6 8 चैव हि,

C 8. 1421 B 8 33 31 K 8 24 34

मृतस्तस्यां परिक्षिप्तस्तादृशेनैव जज्ञिवान् ॥ २६

तां प्राप्य *त्रैपुरस्थास्तु सर्वाँल्लोकान्वबाधिरे ।
महता तपसा सिद्धाः सुराणां भयवर्धनाः ।
न तेषामभवद्राजन्क्षयो युद्धे कथंचन ॥ २७

ततस्ते लोभमोहाभ्यामभिभूता विचेतसः ।
निर्ह्रीकाः संस्थितिं सर्वे स्थापितां समलूलुपन् ॥ २८

विद्राव्य सगणान्देवांस्तत्र तत्र तदा तदा ।
विचेरुः स्वेन कामेन वरदानेन दर्पिताः ॥ २९

देवारण्यानि सर्वाणि प्रियाणि च दिवौकसाम् ।
ऋषीणामाश्रमान्पुण्यान्यूपाञ्जनपदांस्तथा ।
व्यनाशयन्त मर्यादा दानवा दुष्टचारिणः ॥ ३०

ते देवाः सहिताः सर्वे पितामहमरिंदम ।

---

S चाप्यथ — c) Da1 D1 5 सृता त(Da1 °स्त)स्या K4 परिक्षिप्तास्; Da1 D5 °क्षिप्तास्, D8 विनिक्षिप्तस् (for परि°) S क्षिप्यते (T1 G2 M8 °तो) निहतो (G2 °ते) वाप्यां — d) Ś2 D5 तादृशेनेव K8 Dn1 जघ्नि(Dn1 °ग्मि)वान्; B1 4 5 Da1 D1 5 जज्ञिरे, S जायते (for जज्ञिवान्) — After 26, S ins

238* सपूर्णबलवीर्यस्तु राजञ्शौर्यसमन्वित ।
एव वीर्येण सयुक्ता कृतास्तेन महात्मना ।
[(L 1) T8 G8 °बलवंतस्तु and °समन्विता — (L. 2) T1 8 G सयुक्त ]

27 a) V1 त, Dn1 D8 सं-, D2 ते (for तां) Ś K1. 2 4 ते पुरस्त्वात्तु; K8 B1 ते पुरस्तास्तु (B1 °स्ते), V1 B4 5 Da1 Dn1 D1 8–3 ते पुनस्तास्तु (D3 °स्तासु), B2 ते पुनवापीं, D2 त्रैपुर व तु, S त्रैपुरा (T1 त्रैपुर, T8 G8 ते परां) वापीं (G2 चापि) (for *त्रैपुरस्थास्तु) — b) K8 V1 B (B8 damaged) D (except D2) T G M1 लोकान्सर्वान् (by transp), K4 D8 सर्वलोकान् B2 नराधिप (for वबाधिरे) — After 27ab, B2 ins

239* वरलोकेऽवसत्सोऽपि हरि परमतेजसा ।
विधाय सर्वलोकाना हितं पथ्य विधाय च ।
तव परमनिर्विघ्नो हितकारी तावकात्मसु ।
[(L 3) Posterior half, hypermetric.]

— c) K1 महतस् (for महता) T8 G युक्ता, M1 सिद्धा — d) M1 पुराणा (for सुराणां) — After 27cd, S ins

240* एकस्मिन्निहते दैत्ये सृजन्ति स दशासुरान् ।
[G1 निहिते M दशापरान् ]

— ef) S विद्यते (for अभवद्) S transp राजन् and युद्धे K8 V1 B1 5 Dn1 D2–4 6 7 कदाचन (for कथंचन)

28 a) M4 लोह° (for लोभ°) — c) Ś2 नहीका, T2 निस्सृता, T8 G M1 निर्भीता (G1 M1 °का) (for निर्ह्रीका) K8 V1 B1. 4 D2 8 7 सस्थिता, T2 8 G M सहिता, Ca सछिती (sic), Co संस्थितिं (as in text) D4 (by corr.) पूर्वे (for सर्वे) B2 तव प्रस्थापिता सर्वे T1 निश्रीकाश्चामरान्सर्वे — d) K8 V1 B1 4 D2 8 7 T2 8 G स्थापिता (K8 °ता); B2 मर्यादा, M स्थापना (for स्थापिता) B1 समलूपम (sic), D1 5 °ल्लुपन्; D2 T2 °लोलुपन्; G1 °लोलुपा, G2 सर्वलोलुपा (for समलूलुपन्) T1 स्थापितान्स्वर्गलोलुपान्

29 a) Da1 D1 5 विभ्राम्य (for विद्राव्य) Da1 D1 G1 देवास् (for देवास्) — c) V1 सर्व- (for स्वेन) — d) K1 दक्षिता, K8 वर्पिता (for दर्पिता) — After 29, K4 B D (D8 marg sec m) ins 242*

30 a) V1 B1 2 Dn1 D3 4 6 7 देवोद्यानानि (for देवारण्यानि) Dn1 S रम्याणि (G2 °नि) (for सर्वाणि) — b) D2 गृहाणि, S स्थानानि (for प्रियाणि) D1 om च K8 दिवौकस, D8 °सं — c) B5 रम्यान्, Da1 D1, 5 दिव्यान् (for पुण्यान्) — d) K8 V1 B1 2 4 Dn1 D2–4 T2 रम्यान्, B5 Da1 D1 5 पुण्यान्, D6 T1 8 G M धर्म्यान् (D6 T8 G2 8 °र्मान्) (for यूपान्) K8 जनपदान्वितान् (for °पदांस्तथा) D7 T1 M2–4 तदा (for तथा) — e) K2 विनाशयत; V1 व्यनाशयश्च; Da1 D1 5 व्य(D1 व्या)नामयत; D2 8 विनाशयतो (for व्यनाशयन्त) Ś K4 सर्वत्र, K2 damaged, B1 4 Dn1 D6 7 मर्यादां K8 B2 D8 4 व्यनाशयन्समर्यादा, S उत्साद(T8 G8 °त्पाट-, G2 °त्पाद)यत्यमर्यादा — f) K4 युद्धचारिण, B5 Da1 D1, 5 दुष्टचेतस — After 30, S ins

241* निस्थानाश्च कृता देवा ऋषय पितृभि सह ।
दैत्यैस्त्रिभिस्त्रयो लोका ह्याक्रान्तास्तै सुरेतरै ।
[(L 2) M1 ते (for तै) ]

S (except G8) cont K4 B (B8 damaged) D (D8 marg sec m) ins after 29

242* पीड्यमानेषु लोकेषु तत शक्रो मरुद्वृत ।
पुराण्यायोधयाचक्रे वज्रपातै समन्तत ।
नाशकत्तान्यभेद्यानि यदा भेत्तु पुरंदर ।
पुराणि वरदत्तानि धात्रा तेन नराधिप ।
तदा भीत सुरपतिर्मुक्त्वा तानि पुराण्यथ । [5]
[(L 1) D7 सर्वेषु (for लोकेषु) — (L. 2) D2 पुराणां योधनं चक्रे, D5 6 8 T2 पुराण्य(D6 °णि)योधयां चक्रे D8 वज्रपात-, S (G8 om) °हस्त (for °पातै) — (L. 3) S (except T2, G8 om) नाशक्नोत् D1 om. यदा D4 T1

अभिजग्मुस्तदाख्यातुं विप्रकारं सुरेतरैः ॥ ३१
ते तत्त्वं सर्वमाख्याय शिरसाभिप्रणम्य च ।
वधोपायमपृच्छन्त भगवन्तं पितामहम् ॥ ३२
श्रुत्वा तद्भगवान्देवो देवानिदमुवाच ह ।
असुराश्च दुरात्मानस्ते चापि विबुधद्विपः ।
अपराध्यन्ति सततं ये युष्मान्पीडयन्त्युत ॥ ३३
अहं हि तुल्यः सर्वेषां भूतानां नात्र संशयः ।
अधार्मिकास्तु हन्तव्या इत्यहं प्रब्रवीमि वः ॥ ३४
ते यूयं स्थाणुमीशानं जिष्णुमक्लिष्टकारिणम् ।
योद्धारं वृणुतादित्याः स तान्हन्ता सुरेतरान् ॥ ३५
इति तस्य वचः श्रुत्वा देवाः शक्रपुरोगमाः ।
ब्रह्माणमग्रतः कृत्वा वृषाङ्कं शरणं ययुः ॥ ३६ C 8 1435 B 8 33 45 K 8 24 51

यथा, T2 तदा (for यदा) — (L 4) K4 च न, D8 तेय (sic) (for तेन) — (L 5) T1.2 M1 पुराण्युत (for °ण्यथ) ]

31 G3 om (hapl) 31 V1 reads 31 twice (with v 1) — a) V1 (first time) B1.3.5 Da1 Dn1 D1-5.7 S (G3 om) तैरेव विबु(Da1 D1.2.5 °वि)धै मार्धं, V1 (second time) D5 तदा देवगणा सर्वे, B2 तैर्देवा विबुधा सर्वे — b) V1 (second time) Dn1 D2.6 उपागमत् (V1 D6 °गमन्, D2 °गता), B3 अरिंदम (for अरिंदम) S (G3 om) ब्रह्माण परमेश्वर — c) V1 (first time) B1.4.5 Da1 D1.6-8.7 S (G3 om) जगामाथ (for अभिजग्मुस्) K3 समाख्यातु (for तदा°) V1 (second time) Dn1 D2.6 आख्यातु (D2 °त) विप्रकार तम् (D2.6 तु) Ca c cite विप्रकार — d) B3 सुरस्तदा, Ca सुरेतरै (as in text) V1 (second time) Dn1 D2.6 असुरेभ्य परंतप

32 a) K1 ततस्त, Dn1 ते तु त; D1 तत्त्व ते (marg ते हि त) (for ते तत्त्व) S ते सर्वमभि(T1 °पि)विख्या(T1.2 M2.4 °ज्ञा)प्य — b) V1 B2 D6 प्रणिपत्य (for [अ]-भिप्रणम्य) B1.4.5 Da1 Dn1 D1-5.7.8 शिरोभि समणम्य च — cd) S तद्वधोपायमाचक्ष्व भगवन्निति चाब्रुवन्

33 a) Da1 D1.2.6 S तु, D6 [अ]थ (for तद्) V1 D2.6 ब्रह्मा (for देवो) — After 33ab, N ins

243* ममापि सोऽपराध्नोति यो युष्माकमसौम्यकृत्।

[K3 [अ]नि (for [अ]पि) K1 [s]गमोति, K3.4 °राधोति, D8 °राध्येति Ś K2.4 यो न युष्मासु सोम्यकृत्, K1 B5 Da1 Dn1 D1.5 यो युष्मासु न नोम्यकृत्, K8 यो युष्मांस्तु न सौख्यकृत् (for the posterior half) ]

On the other hand, S ins after 33ab

244* श्रूयतां त्रिदशाः सर्वे यथेदं वाक्यगौरवम्।
[T1 यथैव (for यथेद) ]

— c) V1 B1.5 D2-4.6.7 हि, B4 Da1 D1.6 ते (for च) S दुरात्मानोसुरा नित्य (T1 °त्मा) — d) D8 ते वापि, M2-4 ये इह (for ते चापि) Cc cites चापि (as in text) S विबुधा मम (for विबुधद्विप ) V1 B1.2 D2-4.6.7 सर्वे एव (D2 °र्वेदेव-) सुरद्विप — e) K4 अपराध्यत, Cc °ध्यन्ति (as in text) S न शक्नुवन्ति ये (T1 M1.2 ते) सर्वे — f) D2 युष्माक, T1 M युष्मान्ये (for ये युष्मान्) K8 मीपयन्पुन (for पीडयन्त्युत) B2 युष्मान्समीपयस्तुतः T2.3 G युष्मान्वै पीडयति ते (T3 वै) Cc cites उत (as in text) — After 33, D2 ins

245* न त्वास्तु तानहं मन्ये ये वै युष्मानपीडयन्।

34 a) V1 D6 काम, B5 अय (for अह) K8 तुल्योस्मि, D2 हि धाता, T1.3 GM समस्तु (for हि तुल्य) T2 अहं समोस्मि भूतानां — b) V1 D2.6 अहमच्युत, B2 च प्रकाशक (for नात्र संशय) — c) Dn1 D8 अधर्मिष्ठा (D8 °का)स्तु V1 D2.6 निग्राह्या (for हन्तव्या) S अविनीता निहन्तव्या — d) B2 D8 S इत्येवं (D8 °व) (for इत्यह) B1.4 तद् (for प्र) V1 D3.4.6.7 इति मे व्रतमाहित, D2 इति मे वर्तते मति Cc cites इति and प्रब्रवीमि (as in text) — After 34, V1 B1.2.4.5 D (except D8) S ins

246* एकेषुणा विभेद्यानि तानि दुर्गाणि नान्यथा।
न च स्थाणुमृते शक्तो भेत्तुमेकेषुणा पुरः।

[(L 1) G2 [अ]मिभिद्यानि, M दि (M1 नि) भेद्यानि (for निभे°) — (L 2) V1 B4 Da1 Dn D1.5 पर, D2 परे (for पुर) S शक्रस्तु तानि बाणेन भेत्तु काम त्रिलोचन ]

35 a) M1 om ते यूय D1 ये (for ते) T1 वय (for यूय) T3 G तपसा स्थाणु (for स्थाणुमीशान) — b) Ś1 K1.2 -कार्मुक; Da1 D1.5 -कारिणा (for -कारिणम्) — c) K1 शृणुतादित्या, Da1 D1.5 वृणुता दिव्या (sic), Dn1 °त देवा, D2 °तोदित्या, S वृणुत (T1 °म) क्षिप्र (for °तादित्या) Ca c cite आदित्या (as in text) — d) B3 D7 हत्वा (for हन्ता) D8 रणेसुरान्, T1 सुरोपमान् (for सुरेतरान्)

36 a) Dn1 इत्येतस्य, D8 तस्य चाथ (for इति तस्य) — For 36ab, S subst

247* ते देवास्तेन वाक्येन चोदिता प्रणता स्थिता ।
दिव्य वर्षसहस्र वै तपस्तप्त्वा सुरर्षभा ।
शुभात्मानो महात्मानो जग्मुर्वै वृषभध्वजम् ।
[(L. 3) M शुद्धात्मानो (for शुभा°) ]

— c) K1.4 ब्राह्मणम् — d) S शरण्य शरण गता

C 8 1437 B 8 33 47 K 8 24 51

तपः परं समातस्थुर्गृणन्तो ब्रह्म शाश्वतम् ।
ऋषिभिः सह धर्मज्ञा भवं सर्वात्मना गताः ॥ ३७
तुष्टुवुर्वाग्भिरर्थ्याभिर्भयेष्वभयकृत्तमम् ।
सर्वात्मानं महात्मानं येनाप्तं सर्वमात्मना ॥ ३८
तपोविशेषैर्बहुभिर्योगं यो वेद चात्मनः ।
यः सांख्यमात्मनो वेद यस्य चात्मा वशे सदा ॥ ३९
ते तं ददृशुरीशानं तेजोराशिमुमापतिम् ।
अनन्यसदृशं लोके व्रतवन्तमकल्मषम् ॥ ४०
एकं च भगवन्तं ते नानारूपमकल्पयन् ।
आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि ।
परस्परस्य चापश्यन्सर्वे परमविस्मिताः ॥ ४१
सर्वभूतमयं चेशं तमजं जगतः पतिम् ।
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः ॥ ४२
तान्स्वस्तिवाक्येनाभ्यर्च्य समुत्थाप्य च शंकरः ।
ब्रूत ब्रूतेति भगवान्स्मयमानोऽभ्यभाषत ॥ ४३
त्र्यम्बकेणाभ्यनुज्ञातास्ततस्तेऽस्वस्थचेतसः ।
नमो नमस्तेऽस्तु विभो तत इत्यब्रुवन्भवम् ॥ ४४
नमो देवातिदेवाय धन्विने चातिमन्यवे ।

---

37 a) K1 समातस्थौ; T3 G समाजग्मुर् (for °तस्थुर्) V1 B1 D3 4 6 7 तपो(D1 6 °तो)नियममास्थाय; D2 ततो नियममासाद्य — D4 (marg as in text) सर्वे (for सह) Co cites ऋषिभि सह (as in text) K1 धर्मज्ञ; Dn1 D8 सर्वज्ञ (for धर्मज्ञा) S अनगमथन (T2 अनन्यमनसः; T3 G कदर्पवैरिण) सर्वे — After 37, S (except T2) ins

248* देवदेवं पर स्थाणु वरद त्र्यम्बक शिवम्।
शर्वमीड्यमज रुद्र शशाङ्काङ्कितमूर्धजम्।

[(L 1) T3 G2 प(G3 व)रेशान, M2–4 हरं स्थाणु (for पर स्थाणु) — (L 2) G2 सर्वेश्वरम् (for शर्वमीड्यम्) ]

38 T2 om. $38^{a}$–$39^{b}$ — a) K3 Dn1 D2 4 8 हृष्टाभिर्; V1 B (B3 damaged) Da1 D1 3 5–7 Co उग्राभिर्, S (T2 om ) अग्र्याभिर् (for अर्थ्याभिर्) — b) K3 भयेपि (for भयेषु) B1, 2 4 5 Da1 D1 3–5 7 [अ]भयद नृप, T1 M °भयमुत्तमं, T3 G °भयमच्युत (for °भयकृत्तमम्) — d) T1 M विश्वम् (for सर्वम्)

39 T2 om $39^{ab}$ (cf v 1 38) — a) K3 °विशेष- (for °विशेषैर्) V1 Dn1 D2–4 6 7 T3 G M विविधैर्, T1 त्रिविधैर् (for बहुभिर्) — b) Ś K1 2 चात्मना (for चात्मन') — c) K1 असख्या; T1 यस्याशम् (for य साख्यम्) Ś सख्यम्, K2 4 Da1 D1 5 सख्याम्; Ca सांख्यम् (as in text) V1 B1 5 D2–4 6 7 वेत्ति (for वेद) — d) D2 भवेत् (for वशे) K1 स च; D2 T2 G1 तदा (for सदा)

40 a) K4 V1 B1 2 4 5 D T G1, 3 M त ते (by transp ), G2 ततो K3 B1 2 4 Dn1 D8 आसीनं (for ईशान) — After $40^{ab}$, S ins

249* परेण यत्नेन भवं त्रिदशा शर्वमीश्वरम् ।

— c) S देव (T1 °वाः) (for लोके) — d) K3 V1 Dn1 D8 (marg sec. m ) S प्रतपंतम्; K4 B2 D2–4, 7 भगवतम्; B1 4 प्रभमतम् (sic), D6 [ऽ]प्रतिमं तम्, D8 प्रपश्यंतम् (for व्रतवन्तम्)

41 a) K3 B2 एव (for एक) M त (for ते) T G एकश्च भगवांस्त(G2 °वान )त्र — b) M2–4 नाम्ना (for नाना-) Ca cites नानारूप (as in text) D1 T1, 3 G2 3 अकल्पयत्; D8 अकल्मषं (for अकल्पयन्) — d) D2 रूपाण्यपि; G2 °ण्येव V1 महाति च; T G2, 3 महामति', G1 M1 °पति', M2–4 °त्मनः (for °त्मनि) — e) T2 परस्पर तु (for °रस्य) M2–4 [अ]प्यासन् (for [अ]पश्यन्) — f) K1 °सस्मिता (for °विस्मिता)

42 a) D8 (marg as in text) °महं (for °मयं) Ś1 देश; K1 ईशं, K3 V1 B1, 2 4, 5 D S दृष्ट्वा (for चेश) — b) K3 ईश (for अज) D8 जगतां T1 प्रभु (for पतिम् ) — c) K1 ब्रह्मादयश्च, T1 ब्रह्मद्या (for °र्षयश्) K3 S सर्वे, Dn1 D8 चापि (for चैव) — d) B5 S अवनीं (M1–3 °निं) (for धरणीं)

43 a) K3 °वाच्येन, B1 2 4 5 D2 4 7 °वादेन; Da1 D1 5 T2 °वाचेन (for °वाक्येन) T1, 3 GM तान्स्वस्ति वाच्य चाभ्यर्च्य — b) D4 समुत्थाय (for °त्थाप्य) — c) K4 भगवन् — d) K2 स्तूयमानो (for स्मय°)

44 a) Some MSS त्र्यबकेन M2 त्र्यबकेशाभ्यनुज्ञातास् — b) K3 ते सर्वे (for ततस्ते) B1, 2 5 सुस्थचेतस', Da1 D5 स्वस्थतेजस'; S त्रस्तचेतस — c) K1 T2 प्रभो (for विभो) K3 V1 B1, 2 4, 5 T1 3 G M नमो नमो नमस्तेस्तु — d) K1 T2 नमो (sic), K3 V1 B1, 2 4, 5 D S प्रभो (D6 °भोर्) (for तत). B1 4 D2–4 7 वच', T1 प्रभु (for भवम्)

45 a) Ś2 K3, 4 B2 4 D2 6 8 S देवाधि(S °दि)देवाय B1 नमोतिदेवदेवाय. Ca cites आदिदेव' — b) Ś1 K1 2 Dn1 धन्वने, Ca, c धन्विने (as in text). V1 Dn1 D1, 5 6 [अ]थ (for च) B1 4 5 [ऽ]थाभिमन्यवे;

प्रजापतिमखघ्नाय प्रजापतिमिरीड्यसे ॥ ४५
नमः स्तुताय स्तुत्याय स्तूयमानाय मृत्यवे ।
विलोहिताय रुद्राय नीलग्रीवाय शूलिने ॥ ४६
अमोघाय मृगाक्षाय प्रवरायुधयोधिने ।
दुर्वारणाय शुक्राय ब्रह्मणे ब्रह्मचारिणे ॥ ४७
ईशानायाप्रमेयाय नियन्त्रे चर्मवाससे ।
तपोनित्याय पिङ्गाय व्रतिने कृत्तिवाससे ॥ ४८
कुमारपित्रे त्र्यक्षाय प्रवरायुधधारिणे ।
प्रपन्नार्तिविनाशाय ब्रह्मद्विट्संघघातिने ॥ ४९
वनस्पतीनां पतये नराणां पतये नमः ।
गवां च पतये नित्यं यज्ञानां पतये नमः ॥ ५०
नमोऽस्तु ते ससैन्याय त्र्यम्बकायोग्रतेजसे ।
मनोवाक्कर्मभिर्देव त्वां प्रपन्नान्भजस्व नः ॥ ५१
ततः प्रसन्नो भगवान्स्वागतेनाभिनन्द्य तान् । C 8 1453 B 8 33 83 F 8 24 67

B3 D1.4 चलशालिने, D3 7 वनमालिने (for चातिमन्यवे) Ca अवि°; Co अभिमन्यवे S प्रियधान्नेतिम° — G2 om 45cd Da1 reads 45cd twice — d) B1 D1 5 ईड्डुपे; Da1 (both times) ईडुदे, D4 7 ईड्यसे, S (G2 om.) ईडित (T1 3 °ते, G1 °त) (for ईड्यसे) ⊛Ca ईड्यसे इति लेखकप्रमादात्।⊛

46 B2 om. 46a–47b — a) T2 G1 2 M1 नमस्कृताय (for नमः स्तु°) — b) B1 5 Dn1 D2–4 6 7 शंभवे, T1.2 M शाकृते, Ca c मृत्यवे (as in text) — c) B1.4 5 घोराय, S धूम्रा(M1 °मा)य, Cc उग्राय (for रुद्राय) Da1 D1.5 विलोहिताख्यायोग्राय Cc cites विलोहिताय (as in text) — d) K3 नीलरुद्राय, B1 °कण्ठाय (for °ग्रीवाय). G2 शामवे (for शूलिने)

47 B2 om 47ab (cf v 1 46) — a) T3 G शर्वराय, Co अमोघाय (as in text) D3 T3 G1 3 M [स]सुगक्षाय, T1 त्र्यक्षाय (sic), T2 [अ]सुगक्ष्णाय, G2 दृगाक्षाय (for मृगाक्षाय) — b) Ś2 प्रहरायुधयोधिने; K3 (before corr) प्रकरायुध°; D2.4 7 T1 M1 क्षमा(M1 °या)य क्रु(T1 क)धनाय च, D6 T3 G M2–4 क्षमाय क्रोधनाय च, T2 सूक्ष्माय सुधनाय च, Cc प्रवरायोग्रयोधिने — ŚK V1 B1 4 5 D (except D3) ins after 47ab B2 after 45

250* अर्हाय चैव शुद्धाय क्षयाय क्रथनाय च ।

[Ś K1 2 4 अर्हे चै निशुद्धाय, Dn1 अर्हाय वै वि°, D2 अर्हा ० दे मृगाराय (for the prior half) For the posterior half, cf v 1. 47b Ś1 K4 क्षमाय, Ś2 K1 2 क्षपाये, K3 V1 क्षमाय, Cc [अ]नघाय (for क्षयाय) Da1 D1.5 कथ° (for क्रथ°) ] — c) V1 D2–4 7 कायाय, B1 शुद्धाय, B3 T2 शुक्राय, Da1 D1.5 शुभ्राय, Ca शुक्राय (as in text). — d) V1 ब्रह्मवादिने, Cc °चारिणे (as in text)

48 a) K3 ईश्वराय, Da1 D1 5 कुमाराय, Co ईशानाय (as in text) Ś2 K1 2 4 प्रमेयाय (for [अ]प्रमेयाय) — b) T1.2 G M1.4 निहन्त्रे (M1 °न्ते), Co नियन्त्रे (as in text) K1 (before corr as in text) धर्मवाससे; B2 4 (marg as in text) 5 Da1 D1 5 Co चीरवाससे, Ca चर्म° (as in text) — K3 G2 om 48cd T1 reads 48cd after 51ab — c) B2 D2–4 7 तपोरताय, M1 ततो नित्याय (for तपोनि°) B. Da1 D1 5 T2 M2 लिंगाय (for पिङ्गाय) — d) B1 कीर्ति°, Ca कृत्ति° (as in text)

49 a) K1 3 4 कुमा(K1 °री)रपित्र्ये — b) Cf 47b Ś1 K3 4 विविधायुध°, V1 D3 4 7 S प्रव(T °धी)रायुधयो-धिने, B1 4.5 °पाणये, B2 °पालिने, Da1 D1 5 6 °पाणिने; D8 सर्वाशापरिपूरिणे — c) G2 प्रपन्नाय (for °न्नार्ति-) — d) Ś2 Da1 D6 G1 ब्रह्मविट्सव°, K1 ब्रह्मद्विजाग°; K3 ब्रह्मर्षिद्विट्घातिने (submetric), D5 G2 ब्रह्मद्विट्प्र(G2 °सर्व)घा°, T2 ब्रह्मविध्वस° — After 49, K4 reads 51ab

50 b) D6 भूताना, T G वनाना, M च(M1 व)राणा (for नराणां) — Ś K2 transp 50cd and 51ab — c) D3 गवाश्वपतये (for गवां च प°) — d) V1 प्रजाना, D3 T2 यज्वना, T1 ज्ञानिनां, M ज्ञानाना (for यज्ञानां)

51 K4 reads 51ab after 49 Ś K2 transp 50cd and 51ab B2 transp 51ab and 51cd — a) V1 सह सैन्याय, D2 ते सेनापते (for ते ससैन्याय) Ca cites ससैन्याय (as in text) S नमो नमोस्तु (T3 G °मस्ते) सौम्याय — b) V1 B1 2 4 D2–4 7 त्र्यम्बकायामितौजसे Ca c cite त्र्यम्बकाय — After 51ab, T1 reads 48cd — cd) Ś2 K1 2 V1 Dn1 G1 2 नमो वा° (for मनोवा°) V1 Da1 D1.5 प्रपन्ना D3 मनोवाक्कायकर्मादिरूपिणे परमात्मने

52 Before 52, T2 ins दुर्योधन — a) G1 प्रपन्नो — b) K1 [अ]भिनिर्दिताम् (sic), K3 °वाच्य तान्, V1 °मन्य तान्, D2 °नदितान् (for °नन्द्य तान्) B2 D3 4 7 च (for तान्) — c) T2 च्येति, G1 चेतु, G2 M1–3 च्येतु, M4 वैतु (for च्येतु) D2 युष्माक, T1 यज्ञामा (for वयामो) — After 52, S ins

251* देवा शर्वस्य वचन श्रुत्वा हर्षमुपागता ।

[M2–4 हर्षसमन्विता ]

— K3 4 V1 B (B3 damaged) D ins an addl colophon after 52, S after 251* [*Adhy name* B1

सुवर्णपुङ्खैर्दशभिर्विव्याधायसमयैः शितैः ॥ १३
तं सूतपुत्रो नवभिः प्रत्यविध्यदरिंदमः ।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ १४
ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः ।
जघान समरे शूरः शरैः संनतपर्वभिः ॥ १५
तावुभौ धर्मराजस्य प्रवीरौ परिपार्श्वतः ।
रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्वसू ॥ १६
युधिष्ठिरः पुनः कर्णमविध्यत्त्रिंशता शरैः ।
सुषेणं सत्यसेनं च त्रिभिस्त्रिभिरताडयत् ॥ १७
शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजम् ।
तांश्चास्य गोप्तॄन्विव्याध त्रिभिस्त्रिभिरजिह्मगैः ॥१८
ततः प्रहस्याधिरथिर्विधुन्वानः स कार्मुकम् ।
भित्त्वा भल्लेन राजानं विद्ध्वा षष्ट्यानदन्मुदा ॥ १९
ततः प्रवीराः पाण्डूनामभ्यधावन्युधिष्ठिरम् ।
सूतपुत्रात्परीप्सन्तः कर्णमभ्यर्दयञ्शरैः ॥ २०
सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च ।
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ २१
यमौ च भीमसेनश्च शिशुपालस्य चात्मजः । C 8 2334 B 8 43 34 K 8 44 36

---

चितै, B1 3 4 D7 S शरै (for शितै) B2 विव्याधायसै शरैश्च (sic), B5 प्रत्यविध्यदरिंदम; G1 विव्याधाय त्रिभि शरै, G3 शरीरांतकरै शरै

14 [a]) V1 B D (except D6) S दशभि (for नवभि) — [b]) Da1 D1 5 अरिंदम — [c]) Ś1 K1 महेष्वासै — After 14, K3 4 V1 B D S ins a passage given in App I (No 9)

15 [a]) B2 D2 शराभ्या M1 पचाल्यौ — [b]) V1 महाबलौ, B5 °बल° (for °त्मन°) — [cd]) K3 4 Da1 Dn1 D1.3.5 7 S जघान चन्द्रदेवं च द(T2 च)ण्डधार च संयुगे (T1 3 G M वशमे)

16 [b]) Da1 D1.5 पार्श्वत स्थितौ, Dn1 T2 युधि पार्श्वत, T1 3 G M युधि भारत (for परिपार्श्वत) — [c]) K3 Dn1 चकासेतां, D6 प्रकाशेते (for चकाशेते) — [d]) G2 चन्द्रस्यैव (for °स्येव) K1 3 4 Dn1 D3 पुनर्वसु (K3 D2 °सु) ❀Cc पुनर्वसुसंबधिन्यौ।❀

17 [b]) T1 आपोथ्यत् (sic) (for अविध्यत्) Ś1 K3 M1 त्रिंशता (K3 °तै); K4 त्रिंशतै, Dn1 D6 T2 निशितै, G1 दशभि (for त्रिंशता) — T1 om 17[cd]. — [c]) Ś K1.2 4 G1 वृषसेनं; D6 वसुनेत्रं (for सत्यसेनं) D2 वसुषेणं सुनेत्रं च

18 [b]) B2 3 G1 M2–4 [अ]थ (for च) — [c]) B1.4 5 D1.7 तास्तस्य; T1 स्वाश्चास्य (sic), T2 तांश्चक°, G2 तांश्चात्र K3 गोप्तान्; T3 G3 गोपान्, M1 गोप्तॄन् — [d]) K1 D5 अताडयन् (for अजिह्मगै)

19 [a]) D2 अधिरथ, T1 2 G1.2 M2–4 अतिरथिर् — [b]) Ś K B2 3 Da1 D1 5 6 8 विधुन्वानस्य कार्मुकम्, B1 विधुन्वानोस्य का°, Dn1 विधुन्वान स्वका°, D2 चक्ररक्षस्य कार्मुकम्, T1 3 G M षष्ट्या राजञ्शितै शरै; T2 विधून्वंस्तस्य कार्मुकम् ❀Cc कार्मुकमिति काकाक्षिन्यायादुभयत्र।❀ — [c]) K V1 B2 Dn1 D2 6 8 T2 छित्त्वा; Da1 D1.5 छित्त्वा (for भित्त्वा) T1 3 G M विद्ध्वा युधिष्ठिर संख्ये (T1 स्ये, G3 °घे) — [d]) K2 न दुर्मदा, B Da1 D1.3 4 7 [अ]नदत्तदा, Dn1 D2 6 T2 ननाद ह (D2 च) D5 om मुदा T1 3 G M ननादाति(M °धि)रथिस्तदा (T1 G1 °था)

20 [b]) K2 अभ्याधावन् Ś1 युधिष्ठिर; V1 B1 4 Dn1 D3–5 7 T2 3 G M अमर्षिता (for युधिष्ठिरम्) T1 अभ्यधावत मर्षिता — [c]) Ś K1 2 4 B3.5 सूतपुत्रं, V1 B1.4 Dn1 D2–5 7 S युधिष्ठिरं, D6 सूतपुत्रा (for °पुत्रात्) — [d]) T1 G2 कर्णं चाभ्यद्रवञ्शरै, T3 G1.3 M कर्णं चाभ्यर्दयञ्शरै

21 T3 G1 3 repeat 21,[ab] after 441* — [a]) K3 सुषेण सत्यसेन च, T3 G1 3 (all both times) सात्यकिं चेकितान च — [b]) T3 G1 3 (all first time) युयुत्सुं T1 3 (second time) G1 (second time) 2 3 (second time) M पार्थिवश्च (G2 °व स ) ह, T2 पाण्डवै सह; T3 (first time) पाण्डवास्तदा, G1 (first time) पांडवांस्तथा; पांड्यमेव च Cc cites पाण्ड्य (as in text) K3 त्रिभिस्त्रिभिरताडयत् — After 21[ab], T3 G1 3 ins

441* चोल च चेरक चैव सिंहलद्वीपवासिनम्।
कर्णो विव्याध सक्रुद्धो दाक्षिणात्यान्समन्तत ।

[(L 1) G3 केरल (for चेरकं) G1 वासिना, G3 वासिन — (L. 2) G1 कर्णेर् G3 सहस्रश (for समन्तत) ]

22 [b]) D1 शिशुपालश्च, D2 T2 चेदिराजस्य D1 चात्मन, D6 चात्मजा — [c]) T1 3 G M करूशा (for कारूषा) B3.4 करूष(B1 °षा)मत्स्यशूराश्च; Dn1 T2 कारूष(T2 °श)मत्स्यभोजाश्च; D6 कारूषा मत्स्यसेनाश्च — [d]) K3 कौरुषा (sic), K4 Dn1 D4 6 8 कैकया G1 कौसला (for को°) — [e]) G1 3 त एते (for एते च) Dn1 T2 3 G3 M तु (for च) Ś1 स्वारिता, Dn1 T2 [अ]तिरथा (for त्वरिता) B2 एते चान्ये च त्वरिता — [f]) K3 V1 सुसेण; Cc वसुषेणम् (as in text) Da1 D1 3–5

2334 49 34 44 36 कारूपा मत्स्यशेषाश्च केकयाः काशिकोसलाः ।
एते च त्वरिता वीरा वसुषेणमवारयन् ॥ २२
जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः ।
वराहकर्णैर्नाराचैर्नालीकैर्निशितैः शरैः ।
वत्सदन्तैर्विपाठैश्च क्षुरप्रैश्चटकामुखैः ॥ २३
नानाप्रहरणैश्चोग्रै रथहस्त्यश्वसादिनः ।
सर्वतोऽभ्याद्रवन्कर्णं परिवार्य जिघांसया ॥ २४
स पाण्डवानां प्रवरैः सर्वतः समभिद्रुतः ।
उदैरयद्ब्राह्ममस्त्रं शरैः संपूरयन्दिशः ॥ २५
ततः शरमहाज्वालो वीर्योष्मा कर्णपावकः ।
निर्दहन्पाण्डववनं चारु पर्यचरद्रणे ॥ २६
स संवार्य महास्त्राणि महेष्वासो महात्मनाम् ।

क्षताडयत् (D3-5 °न्), D8 अयाधयन् K3 सुषेणमवताडयत्, सुषेणमवधावयन्; T1 कर्णमभ्यद्रवन्रणे; Cv वसुषेणमताडयत्

23 a) Hypermetric Ś1 पांचाल्यौ, K3 पाचाल्य; G1 पाचाल° Ś2 K1 2 4 जनमेजयपांचाल्यौ (Ś2 °पचालौ)° — b) Ś K1 2 कर्णौ, Dn1 कर्णे K3 पत्रिभिः, T3 G3 सत्वर° (for सायकैः) — c) B1-4 D2-4 6 7 व(D2 वा)-राहकर्णं; D8 वाराहकर्णैर् Dn1 S व(Dn1 M1 वा)राहकर्णे (Dn1 °र्णि)नालीकैर् — d) K3 D6 8 नालिकैर्; V1 Da1 D1 5 नाडीकैर्, Dn1 S नाराचैर् (for नालीकैर्) V1 T3 G विविधैः; Dn1 M विशिखैः (for निशितैः) Da1 D1 अपि, D8 M क्षुरैः; G1 शिरैः (for शरैः) — e) G1 2 वत्सदत° K3 विपाकैश्च — f) K3 खुरप्रैश्च, S (except T2) क्षुद्रकैश्च (for क्षुरप्रैश्च) Ś K1 2 4 शकटामुखैः, K3 D8 चडकामुखैः, D2 कंदकामुखैः, D4 T1 चकटामुखैः, T2 कटकामुखैः, M2-4 च शिलीमुखैः

24 a) G2 नानाप्रहरकैः D6 घोरैर्, T1 तीक्ष्णैर् (for चोग्रैर्) — b) B Da1 D1 3-5 7 रथहस्त्यश्वसादिभिः, D6 रथाश्वगजसादिनः, S हस्त्यश्वरथसादिनः — c) K3 V1 B Da1 D1 3-5 7 8 S [ऽ]भ्यद्रवन्, Dn1 [ऽ]भ्यहनत्, D6 व्यधमन् T3 G तूर्णं (for कर्णं) — d) D1 परीवार्य, D2 पराजय, T2 परिवव्रुर् (for परिवार्य) Dn1 M1 जिघासव°

25 a) D8 प्रवरान् — b) T1 सर्वेश्च (for सर्वतः) — After 25ab, S ins

442* छाद्यमानैः शितैर्बाणैः स्वस्वनामाङ्कितैस्तदा ।
न चचाल रणे कर्णो महेन्द्रो दानवैरिव ।

[(L 1) T3 G3 छाद्यमान T1 3 M शरैर्घोरैः (for शितैर्बाणैः) T1 G1 2 M1 शरैः, T3 G3 M2-4 शितैः (for तदा)]

— c) K3 V1 B D (except D8) S (except G1) उदीरयन् — d) K3 V1 B D S आपूरयन् (for संपू°) D2 6 जगत् (for दिशः) — After 25, S ins

443* निजघान महेष्वासान्पाञ्चालानेकविंशतिम् ।

Colophon

संजयः ।

ततः पुनरमेयात्मा चेदीनां प्रवरान्दश ।
न्यहनद्भरतश्रेष्ठ कर्णो वैकर्तनस्तदा ।
तस्य बाणसहस्राणि सम्प्रपन्नानि मारिष ।
दृश्यन्ते दिक्षु सर्वासु शलभानामिव प्रजाः ।
कर्णनामाङ्किता बाणाः स्वर्णपुङ्खाः सुतेजनाः ।
नराश्वकायान्निर्भिद्य पेतुरुर्व्यां समन्ततः ।
कर्णेनैकेन समरे चेदीना प्रवरा रथाः ।
सृञ्जयाना च सर्वेषा शतशो निहता रणे ।
कर्णस्य शरसछन्न बभूव विपुल तमः ।
नाज्ञायत ततः किंचित्परेषामात्मनोऽपि वा ।
तस्मिंस्तमसि भूते च क्षत्रियाणा भयकरे ।
विचचार महाबाहुर्निर्दहन्क्षत्रियान्बहून् ।

[(L 1) T3 G2 पाचाल्यान् — Colophon *Adhy name* M1 कर्णमोहन — *Adhy no* (figures, words or both) T1 3 G M 44, T2 45 — T3 om lines 2-7 — (L 2) T2 बहून्, G1 दिश (for दश) — (L 3) G3 भरतश्रेष्ठ° — (L 4) T2 सुप्रसन्नानि, G2 सम्प्रणुन्नानि, M2-4 संप्रकीर्णानि — (L 8) T1 G हता (for रथा) — (L 10) G1 शिरसंछिन्न (sic), M1 रथ°, M2-4 सशर छन्न G1 बभूवुर् T2 M3 विमल T2 नम (for तम) — (L 11) M1 न (for ना-) G1 च (for वा) — (L 12) T1 2 G1 2 M तस्मिंस्तमसि M2-4 संभूते (for भूते च) — (L 13) T1 महाबाहु T1 3 G3 निदहन्, G1 2 अदहन् (G2 °द्)]

26 a) B2 शरमहान्कालो (sic) — b) B2 वीरार्यो; Dn1 वीर्यवान्, S वीर्यार्चिः (for वीर्योष्मा) B1 कर्ण पावकम् — c) K3 निदहन्, B2 निर्दयन्, D6 निर्दहत् Ś2 K1 4 B1 T1 पाडवचमूः; V1 Da1 D1 5 पांडवबल, B3 T3 पाडवीं सेनां; G1 पाडवानीक; G2 पांडवचर — d) B (except B2) D3 4 7 वीरः (for चारु) — After 26, S ins

444* ततस्तेषां महाराज पाण्डवानां महारथाः ।
सृञ्जयानां च सर्वेषां शतशोऽथ सहस्रशः ।
अस्त्रैः कर्णं महेष्वास समन्तात्पर्यवारयन् ।

[(L 3) T1 शरैः (for अस्त्रैः)]

27 a) B1 3 4 Da1 D1 3-5 7 संधाय; B2 संवाह्य, T1 निवार्य (for संवार्य) B2 5 सहस्राणि (for महास्त्राणि)

प्रहस्य पुरुषेन्द्रस्य शरैश्चिच्छेद कार्मुकम् ॥ २७
ततः संधाय नवतिं निमेषान्नतपर्वणाम् ।
बिभेद कवचं राज्ञो रणे कर्णः शितैः शरैः ॥ २८
तद्वर्म हेमविकृतं रराज निपतत्तदा ।
सविद्युदभ्रं सवितुः शिष्टं वातहतं यथा ॥ २९
तदङ्गं पुरुषेन्द्रस्य भ्रष्टवर्म व्यरोचत ।
रत्नैरलंकृतं दिव्यैर्व्यभ्रं निशि यथा नभः ॥ ३०
स विवर्मा शरैः पार्थो रुधिरेण समुक्षितः ।
क्रुद्धः सर्वायसीं शक्तिं चिक्षेपाधिरथिं प्रति ॥ ३१
तां ज्वलन्तीमिवाकाशे शरैश्चिच्छेद सप्तभिः ।
सा छिन्ना भूमिमपतन्महेष्वासस्य सायकैः ॥ ३२
ततो बाह्वोर्ललाटे च हृदि चैव युधिष्ठिरः ।
चतुर्भिस्तोमरैः कर्णं ताडयित्वा मुदानदत् ॥ ३३ C 8 2347 B 8 49 47 K 8 44 59
उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन् ।

— b) B (except B2) Da1 D1-5 7 महामना — d) S कर्णश्च (for शरैश्च) K3 सायकम्, D2 पांडव (for कार्मुकम्)

28 a) Da1 D1.5 T1 M2-4 नवभिर् T2 तत स्मयमानं तु — b) V1 B1 Dn1 D3 4 7 G1 2 नतपर्वण, T1 M2-4 °पर्वभिः. B2 4 Da1 D1 5 निमेषांतरमात्रत — c) K3 राजन् (for राज्ञो) — d) Ś K D5.8 तत (for रणे) D2 शतैः (for शितैः)

29 a) Dn1 चर्म (for वर्म) — b) K3 V1 T G1 3 M रत्नचित्रं पतद्धर्मो, B Da1 D1 3-5 7 रत्नचित्रं वर्मो पतद्, Dn1 D3 G2 रत्नचित्रं पतद्भुवि, D2 6 रत्नचित्र पतत्तदा — cd) Da1 D1 5 स विद्यु, T1 सवितृ, M2-4 सुश्लिष्टं (for सवितु) V1 B Da1 D1-8 T1 श्लिष्ट, Dn1 T2 श्लिष्ट, T3 G1 3 बिंबं, M2-4 शैलाद् (for शिष्टं) V1 D3 T1 M वाताहत

30 a) V1 B1 3 4 D3 4 7 T3 G तदगात्, B3.5 तदकात्, Da1 D1 5 तदंगे, D8 तदयं (marg °दिदं) (for तदङ्गं) — b) Da1 D1-5 7 T3 G1 2 भ्रष्ट (for भ्रष्ट°) K3 व्यमोचत, T3 G1 3 M2-4 व्यशोभत, G2 व्यपोहत — c) K4 रत्नं, B1.3 D4 शरैर् (for रत्नैर्) K3 B Da1 D1-5 7 8 चित्रैर्, V1 Dn1 T2 मुख्यैर्, D5 चैव, T1 3 G M पुण्यैर् (for दिव्यैर्) — d) B1 transp यथा and नभ V1 B5 Dn1 D2 6 8 S [अं]बर (for नभ) K3 व्यथित निशितैर्यथा

31 a) K3 V1 B Da1 D1-8 T1 2 M3 छिन्नवर्मा, Dn1 T3 G M1 3 4 भिन्नव(G2 °श)र्मा (for स विवर्मा) — b) D2 6 मम(D2 °सु)द्रित, T1 3 G M परिप्लुत (for समुक्षित) — After 31ab, T G ins

445* यमामे पुरुषश्रेष्ट उदयन्निव दिवाकर ।
स शरार्पितसर्वाङ्गश्छिन्नवर्माथ सयुगे ।
क्षत्रधर्मं समास्थाय सिंहनादमथाकरोत् ।
नदित्वा च चिर काल पाण्डवो रमसो रणे ।

[(L 1) G1 पुरुषेंद्रश्च — (L 3) G1 क्षत्रधर्माथ संस्थाय (for the prior half) G2 अकुर्वत (for अथाकरोत्) — (L 4) T1 स नदित्वा T1 रमसाद् ]

— cd) B1 2 D3 4 7 तत (for क्रुद्ध) D8 स आयसीं (for सर्वा°) D2 अधिरथ T G शक्तिं चिक्षेप वेगेन प्रदीप्तामशनीमिव (T1 G2 °नीं यथा)

32 b) S शक्तिं सप्तभिराशुगैः (M2-4 °यसैः) — cd) Ś1 K3 V1 B D अगमन् (for अपतन्) S भल्लैश्चिच्छेद राधेय (M1 °य) सा त्वशी (T1 व्यशी, M1 स्वकी)यैव वै रणे- (T1 भुवि)

33 a) T G3 M हृदि, G1 2 युधि (for ततो) B2 राज्ञोर् (for बाह्वोर्) D5 om च — b) S क्षिप्रकारी (for हृदि चैव) Da1 D1 5 एव (for एव) B2 3 युधिष्ठिर — B2 3 om (hapl.) 33d-34a — d) K3 V1 B1 4 D S [अ]नदन्मुदा (by transp), V1 [अ]नदन्मुद; B5 [अ]नदन्मुहु

34 B2 3 om 34a (cf v l 33) — a) D1 2 5 6 8 T2 उ(D5 त)द्भिन्नहृदय (for °रुधिर) Ś1 कर्णं, B3 क्रुद्ध (for कर्ण) — b) B3 कर्ण (for क्रुद्ध) — After 34ab, S ins

446* जघान सूत पार्थस्य पार्ष्णि च नवभि शरै ।
[T3 G3 पार्ष्टिं, G2 पार्ष्णीं ]

— c) K1.2 बलेन, S (except T2) नृपते (for भल्लेन) — d) T1 G1 2 M चैव त, T3 G3 त शरैः (for पाण्डवम्) — After 34cd, K3 D3 ins

447* हत्वा सूतं च पार्थस्य पृष्ठगोपं च सायकैः ।

— e) B3 G2 इषुधींश्च, T1 इषुधिं K3 D3 इषुधी चातपत्रं च — f) T3 G1 3 ध्वज (for रथ) T1 [ऽ]भिनत् (for ऽच्छिनत्) K3 D3 चिच्छेद परवीरहा — N ins after 34 T2 after App I (No 10)

448* कालवालास्तु ये पार्थ दन्तवर्णावहन्हया ।
तैर्युक्त रथमास्थाय प्रायाद्राजा पराङ्मुख ।

[(L 1) Ś1 K4 कालवाल तु, V1 °कालास्तु D2 6 8 च

2347 49 47 44 60 ध्वजं चिच्छेद भल्लेन त्रिभिर्विव्याध पाण्डवम् ।
इषुधी चास्य चिच्छेद रथं च तिलशोऽच्छिनत् ॥ ३४
एवं पार्थो व्यपायात्स निहतपार्ष्णिसारथिः ।
अशक्नुवन्प्रमुखतः स्थातुं कर्णस्य दुर्मनाः ॥ ३५
तमभिद्रुत्य राधेयः स्कन्धं संस्पृश्य पाणिना ।
अब्रवीत्प्रहसन्राजन्कुत्सयन्निव पाण्डवम् ॥ ३६
कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः ।
प्रजह्यात्समरे शत्रून्प्राणान्रक्षन्महाहवे ॥ ३७
न भवान्क्षत्रधर्मेषु कुशलोऽसीति मे मतिः ।
ब्राह्मे बले भवान्युक्तः स्वाध्याये यज्ञकर्मणि ॥ ३८
मा स्म युध्यस्व कौन्तेय मा च वीरान्समासदः ।
मा चैनानप्रियं ब्रूहि मा च व्रज महारणम् ॥ ३९

---

(for तु) T2 श्वेतवाल्स्तु ते पार्थ (for the prior half) Da1 D1 5 अवद्वन्पाण्डुरा ह्या (for the posterior half) — (L 2) K3 D8 तान्स्वय वाहयन्संख्ये (for the prior half) ] — After 34, S ins a passage given in App I (No 10)

35 [a]) S (except T2) तत (for एवं) K3 Dn1 [ऽ]व्यपायात्स, V1 B1-4 D2-4 7 [ऽ]प्युपायात्स, B5 [ऽ]पयात्संख्ये, D6 व्यपासर्पन्, S व्य(G1 2 [ऽ]प्य-, G3 M1 ह्य)पायासीद् (for व्यपायात्स) — [b]) Ś K2 3 B निहत पार्ष्णिसारथि॰, V1 निहत पृष्ठसा॰, T1 धुरसा हतसा॰ (sic), T2 M धुर्याभ्या हतसा॰, T3 G3 हताश्वो हतसा॰, G1 द्वाह्वै हतसा॰; G2 रथाह्वै हतसा॰ — [c]) B3 अशक्तवन्, Dn1 नाशक्नुवत्, D1 अशक्नुवत्, T2 M1 नाशक्नुवन् T1 3 G M1 मुखे स्थातु (for प्रमुखत) M2-4 नाशकत्प्रमुखे स्थातुं — [d]) T1 G1 2 M तदा, T3 G3 तत (for स्थातु)

36 [a]) K3 तमभिद्रुत्य, B D2-5 7 अभिद्रुत्य तु, T2 तमनुद्रुत्य (for तमभिद्रुत्य) — [b]) K3 V1 B Da1 D1-4 6-8 स्कंधे Dn1 S पाण्डुपुत्र युधिष्ठिर (T2 महारथ) — After 36[ab], Dn1 T2 ins

449* वज्रच्छत्राङ्कुशैर्मत्स्यैर्ध्वजकूर्माम्बुजादिभि ।
लक्षणैरुपपन्नेन पाणिना पाण्डुनन्दनम् ।
पवित्रीकर्तुमात्मान स्कन्धोपरि समस्पृशत् ।
प्रहीतुमिच्छन्स बलात्कुन्तीवाक्यं च सोऽस्मरत् ।
तं शल्य प्राह मा कर्ण गृह्णीथा पार्थिवोत्तमम् ।
गृहीतमात्रो हत्वा त्वा मा करिष्यति भस्मसात् ।
[(L 6) T2 करिष्यतु (for ॰ति) ]

— [c]) K3 असहन् D2 T2 कर्ण (for राजन्) — [d]) D8 विकुत्सन् (for कुत्सयन्)

37 [a]) D1 मम (for नाम) — [b]) K4 क्षत्रधर्मे, B2 D3-5 7 ॰धर्म- — [c]) K3 जघान, G1 प्रसह्य (for प्रजह्यात्) B1 3-5 Da1 D1 3-5 7 समर भीत (B3 4 ॰रु) (for समरे शत्रून्) K3 D8 शत्रु, D2 सर्वान् (for शत्रून्) — [d]) D2 6 महामृधे (for ॰हवे)

38 [a]) K4 स भवान्, T3 G3 न हि त्व (for न भवान्) K3 क्षत्रधर्मेण, T1 ॰धर्मे तु — [b]) K3 B1. 3-5 D1 3, 4 7 G1 2 M कुशलो हीति, V1.D6 कुशलोस्तीति; T1 कुलशोद्विति (sic) (for कुशलोऽसीति) — V1 reads 38[cd] on marg — [c]) K3 ब्राह्मबले, M2 ब्राह्मे कुले Ś2 युक्ते — [d]) K3 B2 स्वाध्याययज्ञकर्मणि (B2 ॰सु)

39 [a]) V1 मास्मान् (for मा स्म) — [b]) K4 B Da1 D1-5 7 T1 3 G M मा स्म, Dn1 मा च, T2 न च (for मा च) D8 (before corr ) समानद , T1 G1 2 ॰सत (for ॰सद) K3 माचासन ममासद (sic) — [c]) K3 मा, B2 न (for मा) K1 B Dn1 D3 4 7 चैतान्, Da1 D1 5 वैतान्, D6 वैनाम् (for चैनान्) D8 ब्रूया T G M2-4 मा चै(G2 मै)वं (T2 व) विप्रियं ब्रूहि, M1 मा चैव धीप्रिय ब्रूहि (sic) — [d]) B Da1 D1-5 7 8 वै (for च) D8 महाहव K3 मा च प्रज*हाहवम्, Dn1 S मा च त्व भज (Dn1 व्रज) सयुग — After 39, Bom. ed and S ins

450* वक्तव्या मारिषान्ये तु न वक्तव्यास्तु मादृशा ।
मादृशान्हि ब्रुवन्युद्धे एतदन्यच्च लप्स्यसे ।
स्वगृह गच्छ कौन्तेय यत्र वा केशवार्जुनौ ।
न हि त्वा समरे राजन्हन्यात्कर्ण कथचन ।

Colophon

[(L 1) G2 वक्तव्यास्त्वादृशान्येषु (for the prior half) T2 च (for तु) — (L 2) T2 वि- (for हि) T2 एतदन्यत्र लप्स्यसि (for the posterior half) — (L 3) Bom. ed तौ (for वा) — (L 4) G1 2 M त्वा (for त्वा) and transp राजन् and कर्ण T2 om the colophon — *Adhy name* T1 M1 युधिष्ठिरपराजय — *Adhy. no* (figures, words or both) T1 3 G 45, M 44.]

T1 3 G M cont.

451* सजय ।

वरप्रदान कुन्त्यास्तु कर्ण स्मृत्वा महारथ ।
वधप्राप्तं तु कौन्तेय नावधीत्पुरुषोत्तमम् ।

[(L 1) T3 वरप्रदानात् G3 मत्वा (for स्मृत्वा) — (L 2) M2-4 हि (for तु) T3 G3 M3 पुरुषोत्तम ]

एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ।
न्यहनत्पाण्डवीं सेनां वज्रहस्त इवासुरीम् ।
ततः प्रायाद्द्रुतं राजन्व्रीडन्निव जनेश्वरः ॥ ४०
अथ प्रयान्तं राजानमन्वयुस्ते तदाच्युतम् ।
चेदिपाण्डवपाञ्चालाः सात्यकिश्च महारथः ।
द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ ॥ ४१
ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम् ।
कुरुभिः सहितो वीरैः पृष्ठगैः पृष्ठमन्वयात् ॥ ४२
शङ्खभेरीनिनादैश्च कार्मुकाणां च निस्वनैः ।
बभूव धार्तराष्ट्राणां सिंहनादरवस्तदा ॥ ४३
युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरः ।
श्रुतकीर्तेर्महाराज दृष्टवान्कर्णविक्रमम् ॥ ४४
काल्यमानं बलं दृष्ट्वा धर्मराजो युधिष्ठिरः ।
तान्योधानब्रवीत्क्रुद्धो हतैनं वै सहस्रशः ॥ ४५
ततो राज्ञाभ्यनुज्ञाताः पाण्डवानां महारथाः ।
भीमसेनमुखाः सर्वे पुत्रांस्ते प्रत्युपाद्रवन् ॥ ४६
अभवत्तुमुलः शब्दो योधानां तत्र भारत ।
हस्त्यश्वरथपत्तीनां शस्त्राणां च ततस्ततः ॥ ४७
उत्तिष्ठत प्रहरत प्रैताभिपततेति च । C 8 2366 B 8 49 68 K 8 44 68

---

40 b) K3 विसृज्य, B2.3 विमुच्य B1–4 महाबल Dn1 T2 °मना°, T1 G M2–4 °रथ° (for °बल°) — c) B3 प्राहनत्, Da1 D1 4 5 व्यहनत्, D2 अहनत्, D6 अब्रवीत्, G2 न्यहनन् — B3 om. 40ef — e) K3 V1 B1 2 4 5 Dn1 ततो K4 प्रयाद्, V1 D2.3 G1 M [ऽ]पयाद्; B2 [ऽ]पय, B1.4 5 Dn1 D1 4–7 T G2 3 [ऽ]पायाद् K2 4 S (except T2) राजा (for राजन्) — f) V1 B1 5 Da1 D1 3–5 7 T2 नरेश्वर, G2 शनैश्वर

41 a) K3 V1 B2 अथोपयात, B1.3–5 Da1 D1–3 अथापया(D5 3 °या)त Dn1 S अपयां(Dn1 G3 M °पया°, G1 2 °पाया)तं च राजानं — b) K? मत्वशामि पुरयुत (sic), V1 अन्वयु° पुनरव्ययं, B1 अनुजग्मुस्तमुच्यतां, B2 अन्वयु क्लिष्टमच्युत, B3–5 D3 4 7 मत्वान्वीयुस्तमच्युत, Da1 D1 5 6 अनुजग्मु° परतपा°, Dn1 अवपू रथसत्तमा° (sic), D2 T1.3 G M अन्वयामिपुरच्युत (G1 °त°), D3 T2 अन्वयू रथसत्तमा — c) D3 पचाला° — d) Ś K1 2 4 महाबल°, B2 °रथा (for °रथ°) — e) D3 T2 G तत°; T1 तदा (for तथा) T3 G3 वीरा (for शूरा)

42 b) Dn1 पराङ्मुख° — c) K3 वीर, V1 B D (except D6) S वीर° — d) V1 B Da1 Dn1 D1.3–5 7 S प्रहृष्ट, D6 पृष्ठतो (for पृष्ठगै°) K3 D2 4 6 अन्वगात् V1 B Da1 Dn1 D1 3–5 7 T G M2–4 पृष्ठतोन्वगात् (Da1 °न्वागात्, Dn1 °न्वयात्); D5 कुपितोन्वयात्, M1 प्रयतो°, (for पृष्ठम°)

43 a) B2 5 Da1 D1 5 भेरीशङ्खनिनादैश्च (B2.5 °दाश्च), V1 Dn1 D6 S शङ्खभेरीनिनादश्च (T G1 3 °दाश्च, M1 °दाश्च), B1.3 4 D3 4 7 भेरीशंखमृदगाना — b) V1 B2 4 T2 3 G1 3 M2–4 निस्वना ;-B5 Dn1 D3 4 6 7 T1 G2 M1 नि°स्वन K3 कार्मुकारावनिस्वनै — c) V1 S (except T2) बभूवुर्धार्त(T1 °र्त)राष्ट्राणां — d) K2 B2 3 सिंहनादवरस्, D2 T2 °रवास्, T1 3 G M °रवैस् K3 B Da1 Dn1 D2–4 6 7 तथा, S (except T2) सह (for तदा)

44 a) S (except T2) च (for तु) Dn1 D3 S (except T2) कौरव्यो — b) Dn1 आस्थाय (for आरुह्य) B1.5 D2–4.6 7 सत्वरम्, S (except T2) मारिष (for सत्वर) — B3 om 44c–45b — c) Ś K1–3 Dn1 श्रुतकीर्तिर्, T1 श्रुतिकीर्तिर्, G1 महाराजा — d) D1 दृष्ट्वा वा (for दृष्टवान्) Ś1 किल (for कर्ण) Dn1 T2 दृष्ट्वा कर्णस्य विक्रम, T3 G3 दृष्ट्वा तत्कर्मविक्रमं

45 B3 om. 45ab (cf v l 44) — a) D1 काल्य-मान — b) S सूतपुत्रेण पांडव° (T3 G3 मारिष) — c) B Da1 D1 3–5 7 स्वान्, M1 2 यौधान् K1 अवधीत् (for अब्रवीत्) — d) Ś1 हतानेव, K1 शस्त्रैरेव, K2 हतनीव, K3 D2 3 घ्नतैन वै, V1 हतेत्येव, S निघ्नतैना(G2 °ता)न् (for हतैन वै) D6 वा (for वै) K4 B1 4 5 D3 4 7 निघ्नतैता(D3 °ना)न्किमासत, B2 Da1 D1 5 निहतैता-न्किमासत, B3 निघ्नतैतान्कियानसौ°

46 Ś K1 2 D2 om 46ab — a) G2 राजा (for राज्ञा) T3 G3 [अ]भ्यनुज्ञाता, M1 [अ]भ्यनुज्ञातान् — d) K3 तान् T2 3 G1 3 प्रत्यवारयन् (for प्रत्युपाद्रवन्)

47 B3 om 47 — a) K3 D3 तुमल°, M1 तुमुलं — b) M यौधाना Dn1 भारत — K3 om 47c–48b — c) V1 B1 2 5 Da1 D1–3 T1 M2–4 रथहस्त्यश्वपत्तीना, Dn1 T2 रथहस्त्यश्वमुख्याना, T3 G3 रथपत्त्यश्वनागाना, G1 2 अथ हस्त्यश्वपत्तीना — d) Dn1 T2 पत्तीना च समतत°, T1 3 G2 3 M1 द्रवता निनदो महान्, M2–4 द्रवता निस्वनो महान् — After 47, S (except T2) ins

452* उद्धत प्रतिसृष्टाना शस्त्राणां च ततस्तत° ।

[T G2 3 M उद्यत- (for उद्धत) T G M1 प्रतिनिदिष्टानां T3 G3 वृष्टिरवरे (for च ततस्तत)]

48 K3 om. 48ab (cf v l 47) — a) T G1 3 M

2367 49 69 . 44 68 इति ब्रुवाणा अन्योन्यं जघ्नुर्योधा रणाजिरे ॥ ४८
अभ्रच्छायेव तत्रासीच्छरवृष्टिभिरम्बरे ।
समावृत्तैर्नरवरैर्निघ्नद्भिरितरेतरम् ॥ ४९
विपताकाध्वजच्छत्रा व्यश्वसूतायुधा रणे ।
व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणा हतेश्वराः ॥ ५०
प्रवराणीव शैलानां शिखराणि द्विपोत्तमाः ।
सारोहा निहताः पेतुर्वज्रभिन्ना इवाद्रयः ॥ ५१
छिन्नभिन्नविपर्यस्तैर्वर्मालंकारविग्रहैः ।
सारोहास्तुरगाः पेतुर्हतवीराः सहस्रशः ॥ ५२
विप्रविद्धायुधाङ्गाश्च द्विरदाश्वरथैर्हताः ।
प्रतिवीरैश्च संमर्दे पत्तिसंघाः सहस्रशः ॥ ५३
विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः ।
शिरोभिर्युद्धशौण्डाना सर्वतः संस्तृता मही ॥ ५४
तथा तु वितते व्योम्नि निस्वनं शुश्रुवुर्जनाः ।

---

क्षागच्छत; G2 त गच्छत (for उत्तिष्ठत) — b) K1 Da1 D1 5 Co हृत, D7 प्रत (for प्रेत) V1 हतेति प्रहतेति च, B1–5 हतेति प्रच(B5 पत)तेति च; Dn1 निघ्नताभिपतेति च; D6 प्रेताभिपतत्तोघ्नत, S (except T2) क्षिप्र वि(G3 वै)परिधावत Co cites पतत — c) K3 D8 ब्रुवाणास्, M1 ब्रुवाणान् Ś1 K1 3 V1 B D S प्र(K3 D8 ते)न्योन्यं — d) Ś2 K1 2 4 जग्मुर्, M योधा Ś K1 3.4 महाहवे, B (except B6) Da1 D1 3–5 7 T3 G3 महारणे, D6 महामृधे (for रणाजिरे)

49 a) K3 अत्र च्छायेव — b) K3 D2.5 8 T1 2 G M शस्त्रवृष्टिभिर्; D6 अस्त्र° D2 6 अंबरम् Ś2 K4 V1 B3 5 शरवृष्टिरिवावरे (B3 °रात), Dn1 शस्त्रवृष्टिस्तदांबरे, T3 G3 शस्त्रवृष्टिरथाम्बरे — c) K4 V1 B Dn1 D2 4 7 T3 G M2 4 समावृत्तैर्, Da1 D1 5 अनावृत्ते, M1.3 समावृत्ते

50 a) K3 V1 B D2–4 6 7 T2 3 G3 M3 विपताकध्वजच्छत्रा, Da1 D5 °का ध्वजाश्छत्रा, D8 °कध्वजच्छत्रा — b) T1 2 G1 M3 व्यश्वसूतायुधा रथा, T3 G3 व्यश्वसूता रथायुधा, G2 व्यश्वसूतायुधा रथा, M1 [अ]व्यश्वसूतायुधा रथा. — T3 G3 om 50cd — c) K4 व्यगांगा यद्य, T1 व्यगागा धरा (sic), G1 2 यथार्हावयवा., M2–4 विशीर्णावयवा. — d) V1 B Da1 D1 3–5 7 क्षितीश्वराः (for हते°)

51 a) K3 श्रवणानीव, V1 प्रणुन्नानीव, B1.5 D3 4 7 प्रवणादिव; B2 Dn1 D8 T G1 3 M शिखराणीव, B4 प्रवणानीव, Da1 D1 5 प्रचलानीव; D2 6 अवरादिव, G2 शिरोमणीव (for प्रवराणीव) Cv प्रवणादिव शैलानि — b) V1 गजोत्तमा, D4 द्विजोत्तमाः; Co द्विपोत्तमा (as in text). B2 Dn1 D8 S वज्रभिन्नानि मारिष — After 51ab, B2 ins

453* प्रलुत्वा धीर शैलानां शिखराणि द्विपोपमा ।

— D2 om (hapl) 51d–52c — c) K3 T2 3 G3 तुरगा (for निहताः) — d) B1 अचला (for अद्रय) K1 3 B5 हतवीरा सहस्रश ; Dn1 D8 T2 बाणैर्भिन्ना महीतले T1 3 G M द्विपा भि(M1 °पाद्भि°, G3 M3 °धाति)न्ना महीतले

52 D3 om 52abc (of v l 51) K1 om 52–53 K3 B5 om 52 — a) Ś2 K2 4 छिन्नच्छिन्नविपर्यस्तैर्, D8 प्रभिन्नच्छविपर्यस्तैस्, S छिन्नभिन्नविपर्यस्त (G2 °स्त) — b) B Da1 D3 4 6 7 वर्मालकारभूषणै, D6 वर्मालकारनिग्रहै; D8 नानालकार°, T1 3 G वर्मालंकारविग्रहा Co cites सालंकारभूषणै — d) M2–4 हता वीरै G2 शुश्रुवु (sic) (for सहस्रश) B1 ... इवाचला

53 K1 om 53 (of v l 52) Ś K2 om (hapl) 53 — a) B1–3 Da1 D1–5 7 विप्रविद्धायुधाश्चैव, B1 5 T3 G3 °युधागाश्च, Dn1 °युधागैश्च, M1 °युधागा च, M2–4 °युधागापि G1 2 निप्रविद्ध(G2 °त्त)रथागाश्च — b) B1–3 D3 4 7 विरथाश्च रथैर्हता, Da1 विरथाश्वरथै°, D6 विरथाश्वयै°, T1 विरथ रथिभिर्हत ; T2 3 G M द्विरदा(T2 °था) रथिभि° — c) K3 प्रतिवीरैश्च, V1 प्रविर्यैरैश्च (sic), D5 पत्तिवीरैश्च, M1 प्रविवीराश्च Co cites प्रतिवीरै (as in text) B2 3 D7 नमर्दे°, Dn1 D8 T2 समामे; G1 2 सरथै°. — d) K3 सत्ति संघा, K4 पत्तिसघा

54 K1 om. (? hapl.) from ताम्राक्षै (in 54a) up to वितते (in 55a) — b) V1 T3 G M पद्मेंदुप्रतिमाननै°, B2 पूर्णेंदुसदृशा°; T1 पूर्वेंदुप्रतिमा° — G1 om 54c–55b — c) Ś1 (marg) बहुभिर्, K2 4 वीराणा (for शिरोभिर्) — d) D8 शिरोभि (for सर्वत.) Ś2 K2.4 Da1 D1 5 संभृता, K3 सस्कृता; V1 B D2–4 7 T2 संवृता, D8 सस्तृता (for सस्तृता) T1 3 G1 3 M युद्धशौंडै (T2 °ढा) स्तृता (G2 तथा) मही

55 K1 om तथा तु वितते (of v l 54) G1 om 55 (of v l 54) — a) K3 V1 B D S (G1 om) यथा भुवि (V1 भूमौ) तथा (D6 °ते) व्योम्नि B3 transp. निस्वनं and शुश्रुवु — b) Some MSS निःस्वन; K1 द्विस्वनं Ś1 K1 2 4 ददृशुर्; K3 शुश्रुवुर्; G2 वश्रुवुर् (for शुश्रुवुर्) — c) D6 सर्वैर् (for सर्वर्) K3 विमानै रथरवै सर्वै

विमानैरप्सरःसंघैर्गीतवादित्रनिस्वनैः ॥ ५५
हतान्कृतानभिमुखान्वीरान्वीरैः सहस्रशः ।
आरोप्यारोप्य गच्छन्ति विमानेष्वप्सरोगणाः ॥५६
तद्दृष्ट्वा महदाश्चर्यं प्रत्यक्षं स्वर्गलिप्सया ।
प्रहृष्टमनसः शूराः क्षिप्रं जग्मुः परस्परम् ॥ ५७
रथिनो रथिभिः सार्धं चित्रं युयुधुराहवे ।
पत्तयः पत्तिभिर्नागा नागैः सह हयैर्हयाः ॥ ५८
एवं प्रवृत्ते संग्रामे गजवाजिजनक्षये ।
सैन्ये च रजसा व्याप्ते स्वे स्वाञ्जघ्नुः परे परान् ॥५९
कचाकचि बभौ युद्धं दन्तादन्ति नखानखि ।
मुष्टियुद्धं नियुद्धं च देहपाप्मविनाशनम् ॥ ६०
तथा वर्तति संग्रामे गजवाजिजनक्षये ।
नराश्वगजदेहेभ्यः प्रसृता लोहितापगा ।
नराश्वगजदेहान्सा व्युवाह पतितान्बहून् ॥ ६१
नराश्वगजसंबाधे नराश्वगजसादिनाम् ।
लोहितोदा महाघोरा नदी लोहितकर्दमा । C 8 2380 B 8 49 83 K 8 44 102

(sic), S (G1 om ) विमाना(T2 M2-4 °ने)प्सरसा सर्वैर् — d) Some MSS °निःस्वनं , T2 G2 3 M °नादितैः (for °निस्वनैः)

56 G1 om. 56ab (cf. v l 54) — a) Ś K2 4 कृवान्, K3 D2 6 8 हवान् (for कृवान्) V1 B2 Da1 D1 5 T1.2 G2 3 M अभिमुखान्वी(M1 °ने वी)रैर् B1 3-5 Dn1 D2 4 7 T2 अभिमुखान्वीरान् (for कृतानभिमुखान्) — b) K3 (marg ) वीरान्छतसहस्रशः, V1 Da1 D1 5 योधान्योधैः सह°, B D3 4 7 वीरैः (B2 वीरान्, B5 योधैः) शतसह°, Dn1 T2 वीरैश्चैव सहस्रशः, T1 3 G2 3 M नवशोथ सह° — c) G1 2 आरोप्य समगच्छत — d) Dn1 D6 8 T2 विमानैश्च, D4 विमानेन (for °नेषु) D6 अप्सरोगणैः V1 विमानेष्वप्सरोगणाः, B2 विमानेप्सरसो गणाः Cc cites विमानं — After 56, Dn1 ins.

454* तवार्थं न तवैवाय समानमिति वल्लभः ।

Dn1 cont T2 ins after 56

455* परिष्वक्तो विजानाति नारीभिरुपरिन्वितः ।
इति बाहुलतापाशपाशिनो दिव्यरूपिणः ।
समायायाप्सरःसंघा नानायानैर्दिवं ययुः ।

[(L 1) Dn1 नारद्दृष्परिस्थितः (for the posterior half) — (L 2) Dn1 °पाशिता (for °पाशिनो) ]

57 a) K4 ते, K4 Dn1 T1 G1 2 M त (for तद्) — b) D8 प्रत्यक्षस्वर्ग° — d) Ś1 K2 V1 B1 4 5 D (except D7) T2 M2-4 जघ्नुः

58 D8 om. 58-59 — b) Da1 D1 5 एव (for चित्रं) G1 2 युध्यन्ति (for युयुधुर्) — c) G1 2 बहव (for पत्तय°) D2 T3 G3 पत्तिभि पत्तयो (by transp ) T2 सार्धं, G1.2 नागैर् — d) B (except B5) Da1 Dn1 D1 3-5 7 T1 M1 2 4 सहनागैर् (by transp ), T2 नागा नागैर्, T3 G3 M3 सह नागाः G1 2 हता (G2 °तैर्) नागा B2 हयैर्हता ; S (except T2) हया हयैः (by transp )

59 D8 om. 59 (cf v l 58) — b) K3 V1 B (except B2) Dn1 D2-4 7 T2 गजवाजिनरक्षये, T1.3 G M नरवाजिगज(T3 G3 °जन)क्षये — D6 om. (hapl.) 59c-61b — c) K3 D2 7 T1.3 G M सैन्येन (T1 G1 2 °न्ये तु), B3 क्षयेव (for सैन्ये च) B1 D3 4 7 वृत्ते (for व्याप्ते) — d) B2 स्वान्स्वे (by transp ), D2 स्वेदान्, M1 स्वैः स्व S K2 4 जग्मुः (for जघ्नु) T1 परस्परम् (for परे परान्)

60 D6 om 60 (cf. v l 59) — a) K3 Dn1 D8 T G1 3 M कचाकचं युद्धमासीद्, V1 B D1-5 7 कचाकचि (V1 °चिर्)युद्धमासीद्, Da1 युद्ध कचाकचि ह्यासीत्, G2 कचाकच रण ह्यासीत् Cc cites कचाकचि (as in text) — b) K3 दता दंतं, T2 दवा दवी, T3 G2 3 M दवादंत T2 नखानखी, T3 G2 3 M °नख (for °नखि) — c) D8 नरयुद्धं, T2 G3 सुयुद्धं च (for नियुद्धं च) Cc cites नियुद्ध (as in text) — d) K3 देहे पाप्मविनाशन, K4 देहपाप°, V1 देहपाप्माप्रणाशन, B Da1 Dn1 D1-5 7 M देहपाप्मासुनाशन, D8 देहपाप्मानुशासन, T1 देहसर्वविनाशन, T2 देहप्राणवि°, G1 देहपाप विनाशनं

61 D8 om 61ab (cf v l 59) — a) D1 वर्त्मनि, Cc वर्तति (as in text) K3 Dn1 D8 S वर्तमाने तथा (T1 G1 2 °दा) युद्धे — b) K3 V1 B (except B2) Da1 D1 3-5 7 गजवाजिनरक्षये, Dn1 D8 T2 नरवाजिगज°, T1 3 G1 2 M जगतो रोमहर्षणे — D2 om (hapl.) 61cdef — c) B1.3 4 D3 4 7 °नागदेहेभ्य°, B3 °गजदेहेषु — d) B2 5 M2 4 प्रसृता, Da1 D1 4 5 T2 G1 2 प्रसृता, Dn1 प्रश्रुता (for प्रसृता) K1 3 Dn1 D1 4 6 7 T1 G1 2 लोहितापगा° (K1 °रा) (for °गा) Cc प्रसृता लोहितापया — T1 2 om (hapl ) 61ef — e) K3 नराश्व गजदेहाश्च, B1 4 D3 4 7 गजाश्वनरदेहान्सा (D4 °न्सा), B3 D8 °नागदेहान्सा, Dn1 °नरदेहाश्च, G1.2 नराश्वगजदेहाश्चान्; M1 नराश्वगजदेहा सा — K1 om (hapl.) 61f-62a — f) D4 ववाह, G1 ऊहुश्च, G2 रथिनां, M1 [अ]प्युवाह, Cc व्युवाह (as in text) K8 नराश्वगजदेहिना, B5 प्रावाहय निवान्बहून् (sic), Dn1 व्यगाहत सदा बहून्, D8 वाहयंति हतान्बहून्

62 K1 om 62abcde (cf v l 61) K3 4 om. (hapl.)

2381 49 84 44 102 नराश्वगजदेहान्सा वहन्ती भीरुभीषणी ॥ ६२
तस्याः परमपारं च व्रजन्ति विजयैषिणः ।
गाधेन च प्लवन्तश्च निमज्ज्योन्मज्ज्य चापरे ॥ ६३
ते तु लोहितदिग्धाङ्गा रक्तवर्मायुधाम्बराः ।
सस्नुस्तस्यां पपुश्चासृङ्मम्लुश्च भरतर्षभ ॥ ६४
रथानश्वान्नरान्नागानायुधाभरणानि च ।
वसनान्यथ वर्माणि हन्यमानान्हतानपि ।
भूमिं खं द्यां दिशश्चैव प्रायः पश्याम लोहितम् ॥६५
लोहितस्य तु गन्धेन स्पर्शेन च रसेन च ।
रूपेण चातिरिक्तेन शब्देन च विसर्पता ।
विषादः सुमहानासीत्प्रायः सैन्यस्य भारत ॥ ६६
तत्तु विप्रहतं सैन्यं भीमसेनमुखैस्तव ।
भूयः समाद्रवन्वीराः सात्यकिप्रमुखा रथाः ॥ ६७
तेषामापततां वेगमविषह्य महात्मनाम् ।
पुत्राणां ते महत्सैन्यमासीद्राजन्पराङ्मुखम् ॥ ६८

$62^{abcd}$ — a) B2 नराश्वगजसरोधे, B8 °संघाधा, B4 D3.7 °नरसंबाधे, Da1 D1 5 नराश्वरथ°, Dn1 °गजसवाहे, T1 G3 M °गजसपाते — b) V1 नराश्वरथसादिना, B1 5 °गजसादिन, B2 D8 °गजवाजिना, B3 T1 3 G3 M °गजयोधिना, Da1 D1 5 नराश्वराधसादिना; G1.2 गजाश्वनरयोधिना — c) V1 लोहितोद-, G1 लोहितोदा Da1 D5 मही घोरा B5 लोहितौघवहा घोरा — d) B (except B6) Da1 D1 3–5 7 मांसशोणितकर्दमा, D2 6 नदी शोणित° — e) K1 B1 4 5 D3 4 7 नराश्वगजदेहानां, V1 Da1 D1 5 °रथदेहान्सा, B2 Dn1 T1 3 G M °गजदेहान्वै, D2.6 °गजदेहांश्च — f) K2 भीरुभेषणी, K3 4 V1 B D T2 3 G3 °भीषणा (K3 °णा°), G2 °भीषिणी

63 a) K1 V1 B D T2 पार(Dn1 परा)मपार, K3 परमपारे K3 तु (for च) T1 3 G M तस्या नद्या पर पार Co cites अपार (as in text) — b) T3 G3 गच्छंति (for व्रजन्ति) Ś1 K2 व्रजति * वधैषिण°, Ś2 K4 व्रजंतस्ते (K4 °त)वधैषिण, K1 व्रजति ते वधैषिण°, M1 जयति विजयैषिण — c) B3 अगाधे (for गाधेन) Co cites गाधे K1 B1 3 4 D2 3 8 चाप्लवंतश्च; V1 B5 च प्लवति स, Da1 D1.5 चाप्लवति च, Dn1 चोत्प्लवतोन्ये; D4 6 7 वा प्लवंतश्च K4 गाधे प्लवे प्लवतश्च, T1 नागैरवप्लवते च, T2 गाधेनान्ये प्लवतोन्ये, T3 G M नागेन च प्लवतो वै Co cites प्लवंत (as in text) — d) Dn1 वा (for च) V1 [आ]ह्वे (for [अ]परे) D3 निममज्यत चापरे

64 a) Dn1 ता (for ते) B2 M1 लोहितदिग्धागो — b) K3 D7 रक्तचर्मा°, T1 G1 ~ M2–4 रक्तवर्मांबरायुधा° Co cites अंबर — c) B4 स्नस्तास् (for सस्नुस्) K3 D3 [अ]न्ये, Da1 D1 5 [अ]सून्, Dn1 D3 4 7 [अ]स्या; T G2 3 M2–4 [अ]स्र B2 तस्थुश्चास्या पपुश्चास्या — d) B2 सन्मृश्च (sic), B4 मम्राश्च, D6 T1 M ममुश्च, T2 मम्रुदुर्, G1 ममाश्च (sic), G2 मद्राश्च (for मम्लुश्च) K3 परमर्षभा, D2 भरतर्षभा° V1 सस्नुर्मम्लुश्च भारत, Da1 D1 5 मम्लु° सस्नुश्च भारत

65 a) T1 G1 2 M4 नरा नागा (for नरान्नागान्) — B3 om $65^{cd}$ — c) K3 B6 Dn1 चर्माणि (for वर्माणि) T1 3 G M वर्माणि चाप्यपश्याम (G1 2 M3 4 °म°), T2 वर्माणि च वपु श्याम — T2 3 G3 om $65^{de}$ — d) K3 V1 B (B3 om) Da1 D1–3 वध्यमानान् (for हन्य°) K3 हतान्यपि Dn1 T1 G1 2 M पतितानि सहस्रश° ❀Co मथ्यमानैराहतानि त्यक्तानि।❀ — e) B3 om खं D6 च (for द्यां) K3 भूमिपालान्दिशश्चैव, V1 B5 Da1 Dn1 D1 5 T1 G1 2 M ख द्या भूमिं (M2–4 °मिर्) दिशश्चापि (Da1 D1 °श्चैव) — f) K3 पश्यामि K3 D2 T2 लोहितान्; V1 B2 3 5 D3 T1 G1 2 M3 लोहिता°, M1 2 4 लोहिता D6 प्रापश्य श्यामलोहिता°, T3 G3 पतितानि च लोहिते

66 a) K3 V1 B1 Da1 D1.3 5 6 T G M1 च, Dn1 [अ]नु- (for तु) — b) K1 स्पर्शने च, Dn1 स्पर्शनेन (for स्पर्शेन च) G2 रयेन (for रसेन) — c) Ś1 K2–4 B1 3–5 Dn1 D1–5 7 8 S (except T3 G3) [अ]ति-रक्तेन (for °रिक्तेन) — d) G1 सर्पेन (for शब्देन) T3 G3 [अ]पि (for च) K1 Dn1 D4 G1 2 विसर्पिता (Dn1 °ता), B1 3 D1 विसर्पता (D1 °ता) — e) Dn1 T2 तु (for सु-) — f) Dn1 T2 सैन्येषु B3 S (except T2) मारिष (for भारत)

67 a) K1 Dn1 G1 2 त तु, D6 तच्च, D5 ते तु (for तत्तु) B4 विप्रहितं, T3 G3 विप्रद्रुतं, Co त्रिप्रहतं (as in text) K3 ततुर्भवप्रहत सैन्यं (sic) — B3 om (hapl) $67^{b}$–$70^{a}$ — b) Da1 D1 5 तथा, D2 6 तदा (for तव) B1 5 D3 4 7 भीमसेनमुखास्तदा, G1 2 °मुखेन वै — d) Ś1 B1 4 D2–4 7 तदा, B5 D3 T2 रणे, M1 नरा (for रथा)

68 B3 om 68 (cf. v l 67) — a) Da1 D1 5 शह्वम्, Dn1 वीरम् (sic), Co वेगम् (as in text) — b) Ś1 K V1 B (B3 om.) D2–4 6–8 S अविपह्य (K3 °पज्य) V1 B2 4 5 Da1 D1 3 5 6 T1 3 G M निरीक्ष्य च (T1 3 G M वै), Dn1 T2 समीक्ष्य वै (for महात्मना) — c) K3 B1 D2 महा- (for महत्) — d) V1 सर्वं (foi राजन्)

तत्प्रकीर्णरथाश्वेभं नरवाजिसमाकुलम् ।
विध्वस्तचर्मकवचं प्रविद्धायुधकार्मुकम् ॥ ६९

व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्दितं महारण्ये यथा गजकुलं तथा ॥ ७०

इति श्रीमहाभारते कर्णपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

# ३४

संजय उवाच ।
तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम् ।
क्रोशतस्तत्र पुत्रस्य न स्म राजन्यवर्तत ॥ १

ततः पक्षात्प्रपक्षाच्च प्रपक्षैश्चापि दक्षिणात् ।
*उदस्तशस्त्राः कुरवो भीममभ्यद्रवन्रणे ॥ २
कर्णोऽपि दृष्ट्वा द्रवतो धार्तराष्ट्रान्पराङ्मुखान् ।

C 8 2294
B 8 50 4
K 8 45 4

69 K1 B3 om. 69 (for B3, cf v l. 67) — [a]) D6 तत्प्रकीर्णं Dn1 T2 तत्प्रकीर्ण (T2 °र्ण-) रथाश्वं च, T1 तद्विकीर्णमहाश्वेभं, T3 G3 तद्विदीर्णनराश्वेभ, G1 2 M2-4 तद्विदी(G2 M3 °ती)र्णरथाश्वेभं (M2-4 °भ-), M1 इति कर्णं नराश्वेभ — [b]) Dn1 गजवाजिनराकुलं, D6 नरवाजिरथा°, T1 M1 रथावाजिसमा°, T3 गजवाजिरथा°, T3 G3 रथसघसमा°, M2-4 नरप्रवरं — [c]) V1 B2 Da1 Dn1 D1 2 4 5 8 T2 3 G2 3 M विध्वस्तवर्म(Da1 D1 5 °र्मं)कवचं, T1 विविधध्वजसछत्र — [d]) Ś1 K2 B2 D3 4 7 प्रवृद्धायुधकार्मुक, K4 प्रविद्धायुद्ध°, D2 प्रविधायुध°, T1 विध्वस्तायुध°

70 B3 om 70[a] (cf. v 1 67) — [a]) Ś K1 2 4 व्यद्रवद्, D6 प्राद्रवत् — [c]) K1 महापुण्ये, K3 V1 B D (except D6) T3 G3 M इवारण्ये (for महा°) — [d]) B1 यथा (for तथा) Dn1 T2 यथा गजमहाकुल

Colophon — *Day of Karna's Generalship* Ś2 K1 4 द्वितीय(K4 °ये)युद्धदिवसे — *Adhy name* K3 कुरुसैन्यपराजय°, T1 कुरूणां पराजय°, M1 कुरुबलपलायन — *Adhy no* (figures, words or both) Ś1 K1 2 34, Ś2 33 (as in text), B1 49, B4 51, B3 D6 50, Da1 D5 60, D1 44, T G 46, M 45 — *Śloka no* Dn1 94.

## 34

1 D3 om. the ref — [b]) K3 D1.6 7 T3 G3 M1 पांडवास् — After 1[ab], K4 V1 B Da1 Dn1 D1 8-5 7 ins..

456* दुर्योधनो महाराज वारयामास सर्वदा ।
योधाश्च स्वबलं चैव समन्ताद्भरतर्षभ ।

[(L 2) B3 Dn1 D3 7 योधाश्र् B3 om. च K4 भरतर्षभ° ]

— [c]) T1.3 G M2-4 सूतपुत्रस्य, M1 पाडु° — [d]) K3 तस्मिन् (for न स्म) V1 निवर्तते (for न्यवर्तत)

2 [a]) K3 तस्य (for तत ) Ś1 K3 B2 D2 पक्षा°, V1 B1 3-5 Da1 D1 3-5 7 T1 3 G M2-4 पक्ष° (for पक्षात्) K4 प्रपक्षात्पक्षात् (by transp ), Dn1 T2 पक्षप्रपक्षस्या Ś K1 3 B2 D2 6 प्रपक्षाश्च, V1 B1 3-5 Da1 D1 3-5 7 °क्षश्च, T1 3 G M2-4 °क्षस्या (for °क्षाच्च) M1 तत प्रपक्ष° प्रपक्षस्य° (hypermetric) — [b]) Ś1 (*sup lin* as in text) K2 प्रकुक्षैश्च, K3 प्रकुक्षाद्य, V1 B1 3-5 Da1 D1 3-5 7 शकुनिश्च, B2 प्रकुक्षिश्च, D2 संपक्षेश्च, D6 प्रपक्षे, D3 प्रकुक्षेद् (for प्रपक्षैश्च) B3 चैव, D6 वापि, D3 अपि (for चापि) V1 B2 5 Da1 D1 5 6 दक्षिण (D6 °णे), B1 3 4 D3 4 7 सौबल (for दक्षिणात्) Dn1 S प्रकु(T3 G3 प्राकु)क्षिस्याश्च भारत (Dn1 मारिष) — K1 om 2[c]-3[b] — [c]) Ś1 तदस्य॰ शस्त्रा°, K2 उदस्य शस्त्रान्, K3 तदा स॰त्रा, B1-4 D2-4 6-8 तदा सशस्त्रा , T1 3 G M उदात्तशस्त्रा (for *उदस्त°) Ś2 K4 तदस्य कुरव° शस्त्रान्; V1 B3 Da1 Dn1 D1 5 T2 कुरून्विदीर्य (Dn1 T2 °द्रव , D1 °दार्ये)तो दृष्ट्वा — [d]) K3 V1 Da1 D1 5 T2 M1 अभ्यद्रवद्, T3 G3 °दैयन् (for °द्रवन्) K3 D6 8 रुपा (for रणे)

3 K1 om 3[ab] (cf v L 2) — [a]) V1 B5 Da1 D1 5 transp दृष्ट्वा and द्रवतो G1 द्रावयतो (hypermetric) (for द्रवतो) — [b]) B D3 4 7 सराजकान्, D2 रथाश्वनरकुंजरान् — After 3[ab], K4 V1 B Da1 Dn1 D1-7 T2 ins

457* मद्रराजमुवाचेद याहि भीमरथ प्रति ।
एवमुक्तश्च कर्णेन शल्यो मद्राधिपस्तदा ।

[(L 1) D3 मीरथ (for भीम°) — Dn1 D2 T2 om. line 2 — (L 2) K4 उक्तास K4 V1 B3 5 Da1 D1.6 तु (for च) ]

— [c]) Ś1 K2 हसकर्णान् (for °वर्णान्) K3 हयान्त्रासे,

2395 50 5 45 5 हंसवर्णान्हयाग्र्यांस्तान्प्रैषीद्यत्र वृकोदरः ॥ ३
ते प्रेषिता महाराज शल्येनाहवशोभिना ।
भीमसेनरथं प्राप्य समसज्जन्त वाजिनः ॥ ४
दृष्ट्वा कर्णं समायान्तं भीमः क्रोधसमन्वितः ।
मतिं दध्रे विनाशाय कर्णस्य भरतर्षभ ॥ ५
सोऽब्रवीत्सात्यकिं वीरं धृष्टद्युम्नं च पार्षतम् ।
एनं रक्षत राजानं धर्मात्मानं युधिष्ठिरम् ।
संशयान्महतो मुक्तं कथंचित्प्रेक्षतो मम ॥ ६
अग्रतो मे कृतो राजा छिन्नसर्वपरिच्छदः ।
दुर्योधनस्य प्रीत्यर्थं राधेयेन दुरात्मना ॥ ७
अन्तमद्य करिष्यामि तस्य दुःखस्य पार्षत ।
हन्ता वास्मि रणे कर्णं स वा मां निहनिष्यति ।
संग्रामेण सुघोरेण सत्यमेतद्ब्रवीमि वः ॥ ८
राजानमद्य भवतां न्यासभूतं ददामि वै ।
अस्य संरक्षणे सर्वे यतध्वं विगतज्वराः ॥ ९
एवमुक्त्वा महाबाहुः प्रायादाधिरथिं प्रति ।
सिंहनादेन महता सर्वाः संनादयन्दिशः ॥ १०
दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनम् ।
सूतपुत्रमथोवाच मद्राणामीश्वरो विभुः ॥ ११
पश्य कर्ण महाबाहुं क्रुद्धं पाण्डवनन्दनम् ।
दीर्घकालार्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवम् ॥ १२

---

V1 B8 हयान्मुख्यान्, B1 2 4 5 D (except D6 8) T1 3 G M हयानग्र्या(M1 °न्या)न्, T2 हयान्रम्यान् (for °ग्र्यास्तान्) — d) K3 प्रपीड्यत्र Dn1 S प्रेषयद्य(Dn1 °न्य)त्र पाडव, D6 अप्रैषीद्य वृकोदर

4 a) B1 3 4 D3 4 7 प्रेरिता — d) Ś1 K1 2 समासज्जत; B8 प्रसमासत; G2 समसज्यंत

5 a) K3 4 Dn1 समायात — b) D2 6 भीमसेन स सयुगे — c) D2 6 मनो B (except B5) Da1 Dn1 D1 3–5 7 T2 चक्रे, D2 दधे (for दध्रे) — d) K2.3 D6 भरतर्षभ; Dn1 °तोत्तमा, T2 °तोत्तम

6 a) D8 (marg as in text) अव्रजत् M4 सात्यकीं V1 वक्तु, B5 तूर्णं; D8 वीरो, T3 G3 चैव (for वीरं) — Ś K1 2 om 6cd — c) K4 B2 4 D3 4 7 यूय, V1 (marg as in text) एत; B5 शूर (for एनं) — d) K3 4 D6 8 G1 धर्मराज; D2 धर्मपुत्रं (for धर्मात्मानं) — e) K3 D1 युक्त, T2 3 G3 मुक्त — f) D6 कथ च, D8 कदाचित् (for कथं°) Ś K1 2 4 प्रेक्षितो, K3 D2 5 T2 G1 प्रेषितो, D3 प्रेक्ष्यतो (for प्रेक्षतो) B3 D2 मया; T2 गृह्य (for मम)

7 a) Ś1 K2 4 अग्रतोसि K1 अजोतो* Ś1 K2 कृतो राज्ञ (K2 °ज्ञा), M3 महाराजा Ś2 अग्रतोन्यहतो राजश्च (sic). — b) Dn1 छिन्नः; T3 G3 भिन्न (for छिन्न-) K3 छत्रसर्वपरिस्कृत; D6 छिन्नसर्वपरिग्रह, T2 G1 2 M भिन्नवर्मपरिच्छद — d) D8 (sup lin as in text) राधेयस्य (for °येन) K3 दुरासता; D2 महात्मना (for दुरा°)

8 a) Ś2 अतमध्य, K1 अद्य सद्य (sic), V1 Da1 D1 5 G1 2 अहमत; B5 अतमत (for °मद्य) V1 m प्रपश्यामि, B (except B5) Da1 Dn1 D1 3–5 7 S गमिष्यामि (for करि°) — b) T1 अस्य (for तस्य) Ś2 K4 भारत, K1 मार्जन; K3 V1 B2 पार्षत, S मारिष (M3 °प) — c) K4 हर्ता, D2 अतो (for हन्ता) Ś2 (sup lin) K1 [अ]द्यास्मि, K3 B5 Da1 D1 5 6 8 चास्मि, B1–4 D2.4 7 [अ]स्म्यद्य, M1 वा स (for वास्मि) T1 निहतास्मि V1 सोब्रवीत्सात्यकिं कर्णं — d) Ś2 मा, B4 मा (for स) K3 Dn1 T2 3 G मा वा (by transp), V1 D1 वा मा, B4 वा स, M1 मा वा Dn1 [अ]भिहनिष्यति (for निहनि°) — e) K3 संक्रमेण, S संग्रामेद्य K2 सुघोपेण, S °रेस्मिन् (for °रेण) Dn1 संग्रामे पशुघोरेस्मिन् — f) K3 V1 B D (except D8) S (except T3 G3) ते (for व°)

9 b) Ś1 K1 B1 2 4 Da1 D1 3 5 7 ददानि, G2 ददाम K3 V1 B3 D8 ते, K4 च (for वै) — c) Ś K1 2 4 B D3 4 7 G1 तस्य, G2 अद्य (for अस्य) Ś K1 2 4 मे रक्षणे (for संर°) D8 यद्य (for सर्वे) — d) D6 त्वरध्व (for यतध्व)

10 b) Ś2 K3 V1 अधिरथिं (K3 °थ), T2 G2 अतिरथिं (G2 °थं); T3 G1.3 आतिरथिं (G1 °थ) (for आधि°) — c) K1 महत — d) K3 संभावयन् (for सनाद°)

11 a) G1 स्फुरितम्, G2 स्फुटितम् (for त्वरितम्). — b) D1 भीमे K1 युद्धाभिनार्दिनं, K3 °नदन, V1 °नदित, B2 3 युद्धातिनर्दिनं, D2 6 युद्धाभिकाङ्क्षिणं (for °नन्दिनम्) — D8 (hapl) om 11c–12b — c) D2 6 उवाचेद (for अथोवाच) — d) G2 मन्त्रीणाम् (for मद्रा°) Dn1 S प्रभु, D2 6 बली (for विभु)

12 D8 om 12ab (of v l 11) Before 12, N T3 G ins शल्य उवाच — a) Dn1 कर्ता (for कर्ण) V1 D8 महाबाहो, D1 °बाहु, T2 °वीर — b) V1 B D (except D8, D8 om) S सक्रुद्ध पाडुनदन — c) K1 दीर्घं, G1 2 चिर- (for दीर्घ) K2 4 T2 दीर्घकालार्जित (T2 °र्चित) क्रोधं — d) G1 2 M2–4 मोक्तुकामस (for °काम) M2–4 स्वयं (for त्वयि)

ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन ।
अभिमन्यौ हते कर्ण राक्षसे वा घटोत्कचे ॥ १३
त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे ।
बिभर्ति यादृशं रूपं कालाग्निसदृशं शुभम् ॥ १४
इति ब्रुवति राधेयं मद्राणामीश्वरे नृप ।
अभ्यवर्तत वै कर्णं क्रोधदीप्तो वृकोदरः ॥ १५
तथागतं तु संप्रेक्ष्य भीमं युद्धाभिनन्दिनम् ।
अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव ॥ १६
यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर ।
भीमसेनं प्रति विभो तत्सत्यं नात्र संशयः ॥ १७
एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः ।
निरपेक्षः शरीरे च प्राणतश्च बलाधिकः ॥ १८
अज्ञातवासं वसता विराटनगरे तदा ।
द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात् ।
गूढभावं समाश्रित्य कीचकः सगणो हतः ॥ १९
सोऽद्य संग्रामशिरसि संनद्धः क्रोधमूर्च्छितः ।
किंकरोद्यतदण्डेन मृत्युनापि व्रजेद्रणम् ॥ २०
चिरकालाभिलषितो ममायं तु मनोरथः ।
अर्जुनं समरे हन्यां मां वा हन्याद्धनंजयः ।
स मे कदाचिदद्यैव भवेद्भीमसमागमात् ॥ २१
निहते भीमसेने तु यदि वा विरथीकृते ।
अभियास्यति मां पार्थस्तन्मे साधु भविष्यति ।　C 8 2416 B 8 50 25 K 8 45 25

---

13 a) T1 नेदृश Dn1 नव, D2 नास्ति, T1 तस्य, T2 न स्व, G1 न स्स (for नास्य) Da1 D1.5 रूपस्य (for रूप मे) D6 ते, T2 वै (for मे) — b) D2 6 T8 G1 8 M कथंचन — c) Da1 D1 5 हते कर्णे, Dn1 T2 हते चापि, T1 अनिहते; T8 G3 M1 अभिहते, G1 2 M2-4 अपि हते (for हते कर्ण) — d) Dn1 राक्षस, T2 राक्षसौ K8 B D2 8 6-8 T1 G2 च (for वा)

14 a) Dn1 S (except T2) समग्रस्य (for °स्तस्य) — b) Da1 शक्र क्रुद्धो, T8 G3 क्रुद्ध शक्तो (by transp) D2 [ऽ]भिवारणे (for निवा°) — c) B D8 4.7 सदृश, M3-4 तादृश — d) K1 गुरु, D2 6 भृश (for शुभम्) K3 D8 T2 कालाग्निसमवर्चस, V1 B Da1 D1 8-5 7 युगांताग्निसमप्रभ, Dn1 कालाग्नेरिव वर्चस, T1 8 G2 M कालाग्न्यन(M2-4 °नि)लवर्चस, G1 2 °नलसवर्चसं

15 Before 15, K4 V1 B Da1 D1 8-5 7 T2 8 G ins संजय उवाच — a) V1 B3 Da1 Dn1 D1.5 S (except T2) एव (for इति) G2 राधेयो — b) D6 अधिपो Ś1 K1 2 4 D6 नृपे, V1 नृप — c) K8 D6 8 वै कर्ण (D6 °र्णं), T1 G1 2 M राधेयं (for वै कर्णं) — d) K8 D2 6 8 क्रोधदीप्त; G2 क्रोधाद्दीप्तो K8 D6 8 वृकोदर

16 a) B1 2 D6.7 M8 अयागत, B4 समा°; D6 रथा° (for तथा°) T8 G3 च (for तु) D4 स प्रेक्ष्य (for संप्रेक्ष्य) — b) K8 क्रुद्ध (for भीम) Dn1 -नदन (for -नन्दिनम्) T8 G8 भीमसेनमरिंदमं — c) T2 मद्रराजान (for वचनं शल्यं)

17 a) K4 यद्युक्तं T1 मन्ये (for मेऽद्य) — b) K4 मद्रजनेश्वर° K8 गच्छाम्यद्य जनेश्वर — G2 om. (? hapl) 17c-18b — d) Ś2 सैन्य, D8 (marg as in text) सर्वं (for सत्य)

18 G2 om $18^{ab}$ (cf v l 17) — a) K8 वीरश्च, S (except M4, G2 om) क्रूरश्च (for शूरश्च) K8 शूरश्च; D6 T2 M8 धीरश्च, M2 शूरश्च, M4 क्रूरश्च (for वीरश्च) — b) T2 क्रोधितश्च (for क्रोधनश्च) — cd) K8 निरपेक्ष्य B2 प्रागतश्च Co cites प्राणत° (as in text) Ca शरीरे निरपेक्षत्वात्प्राणमात्राद्बलाधिक°

19 a) K4 वहता, G1 वसते; G2 वसतो — b) K2 विरगानगरे (for विराट°) V1 D2 T1 2 तथा (for तदा) — d) K2 वहुसश्रयात्, B2 बाहुसंश्रयां, Dn1 °संश्रमात् (for °सश्रयात्) — e) K1 सूदभाव, B4 (marg as in text) गूढजात, Da1 गूढ भाव, T2 दृढभाव, Ca. c गूढ° (as in text) V1 समासृत्य T1 8 G M प्रसह्य विक्रमेणाजौ — f) D8 transp कीचक° and सगणो

20 a) K8 कोथ, Da1 (before corr) D1.5 कोध (Da1 by corr काद्य) (for सोऽद्य) Ś2 (sup lin as in text) सग्रामशिरसा — b) Ś2 सनद्धा G2 सार्धं * क्रोध सच्छित (sic) — G2 om. $20^{cd}$ — c) K1 किंकरोदित-दंडेन; B2 किमद्य तत°, T2 किं न नोद्यत°; Ca c as in text — d) M1 मन्युना (for मृत्युना) Ca cites मृत्युनापि (as in text) K8 Dn1 रणे

21 Before 21, K8 ins कर्ण उवाच — a) K4 चिरकालोभिलषितो — b) B2 समायां, D8 मयाय, S मम यस् (for ममायं) — d) T8 G3 transp वा and हन्याद् — G2 om $21^{ef}$ — e) G1 न (for स) K8 (marg sec m as in text) अप्येव — f) S भीमसेन° (M न) (for भवेद्भीम-) Dn1 भीमसमागमे T1 8 G8 समागमत्; T2 समागत (for समागमात्) — After 21, Dn1 T2 ins

458* संशय सुमहाञ्शल्य प्राप्य भीममरिंदमम् ।

22 a) V1 B (except B6) D8 4 7 भीमसेने वा, T2

2417 20 27 45 26 अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं संप्रधारय ॥ २२
एतच्छ्रुत्वा तु वचनं राधेयस्य महात्मनः ।
उवाच वचनं शल्यः सूतपुत्रं तथागतम् ॥ २३
अभियासि महाबाहो भीमसेनं महाबलम् ।
निरस्य भीमसेनं तु ततः प्राप्स्यसि फल्गुनम् ॥ २४
यस्ते कामोऽभिलषितश्चिरात्प्रभृति हृद्गतः ।
स वै संपत्स्यते कर्ण सत्यमेतद्ब्रवीमि ते ॥ २५
एवमुक्ते ततः कर्णः शल्यं पुनरभाषत ।
हन्ताहमर्जुनं संख्ये मां वा हन्ता धनंजयः ।
युद्धे मनः समाधाय याहि याहीत्यचोदयत् ॥ २६
ततः प्रायाद्रथेनाशु शल्यस्तत्र विशां पते ।
यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥ २७
ततस्तूर्यनिनादश्च भेरीणां च महास्वनः ।
उदतिष्ठत राजेन्द्र कर्णभीमसमागमे ॥ २८
भीमसेनोऽथ संक्रुद्धस्तव सैन्यं दुरासदम् ।
नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली ॥ २९
स संनिपातस्तुमुलो भीमरूपो विशां पते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ।

M4 (also as in text) °सेनेन (for °सेने तु) — b) Ś2 T1 विरथे कृते — c) M1 मा — d) K1 Da1 D5 साधुर् M1 करिष्यति (for भवि°) B8 तन्मे साधुतर भवेत् — e) K8 B2 अथ, B5 अद्य, D4 T3 तत्र, G1 2 यत्र (for अत्र) T1 य (for यन्) K4 D8 G2 पार्थ, Co प्राप्त (as in text) — f) T1 त (for तत्) B1 संप्रवारय, Dn1 T2 °चक्ष्व मे (for °धारय) — After 22, K4 Dn1 T2 (om lines 3–6) ins

459* भीमसेनं समासाद्य मया शक्य निवर्तितुम् ।
मूर्तिमन्तमह मन्ये मारुतिं मरुता पतिम् ।
युधिष्ठिर भीममिहाथ शङ्कया
यमौ तथा दण्डधर यमप्रभम् ।
वैरेव न सुखकरमाहवोऽस्तु [5]
व्रजामि बीभत्सुमह गदाधरम् ।

[(L 1) Dn1 T2 न भीमसेनमासाद्य (for the prior half) — (L 3) Dn1 अथ (for अथ) — (L 4) Dn1 यम प्रभु — (L 5) Dn1 सुखमावाहोस्तु (for °करमाहवोऽस्तु) ]

23 Before 23, K4 Dn1 T2 3 G ins. सजय उवाच — a) K6 V1 B D S [अ]मितौजस (for महात्मन) — c) K8 शल्य

24 a) Ś2 T3 G3 अभियामि, K8 B D T1 2 G1 2 M °याहि, V1 उपयाहि (for अभियासि) — c) Dn1 व्यपाश्य (for निरस्य) Dn1 T2 च (for तु) — d) फल्गुन — For 24cd, S (except T2) subst

610* निरपेक्षश्च युध्यस्व शक्तिं स्वां संप्रदर्शयन् ।

[G2 स्वशक्ति (for शक्तिं स्वा) T3 G3 स्वशक्ति स्वा संप्रदर्शयन् (hypermetric) (for the posterior half) ]

25 a) Ś1 K4 यत्ते — b) G2 यद्गत (for हृद्गत) — c) B1 Dn1 D5 S ते (for वै) K8 संपश्यते K8 कर्ण..

26 a) D6 उक्त V1 B5 Da1 D1.5 S एवमुक्तस्तु राधेय — b) Dn1 S उवाच ह (for अभाषत) — c) V1 B5 एन (B5 °व) सरथ, Da1 D1.5 T1 3 G M एनं सख्ये (T1 M °ऽधो), Dn1 T2 एन समरे (for अर्जुन सख्ये). D8 हंता भीम च समरे — d) K4 हर्ता; B (except B5) D2–4 7 हन्याद् (for हन्ता) V1 B5 Da1 Dn1 D1.5.8 S वृकोदर (for धनजय) — After 26cd, T G3 M ins.

461* एवमुक्त्वा ततो राजन्राधेयो रथिनां वर ।

[T3 G3 महाराज (for ततो राजन्) T2 कर्णोऽथ (for राधेयो) ]

— e) K8 पुन (for मन) Ś K1 2 4 समादाय — f) D8 [अ]नोदयत् B (except B5) Da1 D1–7 याहि यत्र वृकोदर

27 Before 27, N (except V1 Dn1) ins सजय उवाच — b) G2 शल्य शस्त्रविदा पते — c) K3 तत्र; T3 G M ततो (for यत्र) — d) K8 व्यद्रवेयत्तु (sic), B5 व्यद्रवत्तत्र, D8 T3 G वि(T3 G3 व्य)द्रावयति, M2–4 व्यद्रावयत (for व्यद्रा°)

28 a) S (except T2 M1) तू(G1 सू)र्यनिनादाश्च — b) B5 महत्स्वन, S (except T2) महास्वना — c) B D2–4 7 उदतिष्ठच्च (B4 °त्तु), S (except T2) °तिष्ठत

29 a) T1 G1 2 [अ]पि; T3 G3 हि (for ऽथ) V1 भीमसेनो रथ क्रुद्ध — b) V1 B1 D8 तस्य, D2 तत्र (for तव). — c) D2 M1 विविधैस् (for विमलैस्) — d) Ś2 प्राद्रावहद्, K1 V1 Dn1 प्रद्रावयद्, K8 4 प्राद्र°, B5 प्राच्छाद°, D8 विद्रा° (D8 m व्यद्रा°) (for प्राद्रा°) T1 क्षिप्रमभ्यद्रवद्बली

30 a) Ś2 K8 तुमलो — b) K8 V1 B D S घोररूपो (for भीम°) — c) K8 आसीद्भीम (sic), K4 °अतिरौद्रो; D1 आसीद्रौद्रौ — B2 om 30de — e) D1 मुहूर्तो, T1 मुहूर्त — After 30e, S (except T2) ins

ततो मुहूर्ताद्राजेन्द्र पाण्डवः कर्णमाद्रवत् ॥ ३०
तमापतन्तं संप्रेक्ष्य कर्णो वैकर्तनो वृषः ।
आजघानोरसि क्रुद्धो नाराचेन स्तनान्तरे ।
पुनश्चैनममेयात्मा शरवर्षैरवाकिरत् ॥ ३१
स विद्धः सूतपुत्रेण छादयामास पत्रिभिः ।
विव्याध निशितैः कर्णं नवभिर्नतपर्वभिः ॥ ३२
तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिणा ।
अथ तं छिन्नधन्वानमभ्यविध्यत्स्तनान्तरे ।
नाराचेन सुतीक्ष्णेन सर्वावरणभेदिना ॥ ३३
सोऽन्यत्कार्मुकमादाय सूतपुत्रं वृकोदरः ।
राजन्मर्मसु मर्मज्ञो विद्ध्वा सुनिशितैः शरैः ।
ननाद बलवन्नादं कम्पयन्निव रोदसी ॥ ३४
तं कर्णः पञ्चविंशत्या नाराचानां समार्दयत् ।
मदोत्कटं वने दृप्तमुल्काभिरिव कुञ्जरम् ॥ ३५
ततः सायकभिन्नाङ्गः पाण्डवः क्रोधमूर्छितः ।
संरम्भामर्षताम्राक्षः सूतपुत्रवधेच्छया ॥ ३६
स कार्मुके महावेगं भारसाधनमुत्तमम् ।
गिरीणामपि भेत्तारं सायकं समयोजयत् ॥ ३७
विकृष्य बलवच्चापमा कर्णादतिमारुतिः ।
तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया ॥ ३८
स विसृष्टो बलवता बाणो वज्राशनिस्वनः ।
अदारयद्रणे कर्णं वज्रवेग इवाचलम् ॥ ३९ C 8 2436 B 8 50 46 K 8 45 46

---

462* नाविकृच्छ्रादसश्चिव ।
भीमसेनो महाबाहु

— f) B2 अद्रवत् S (except T2) कर्णं (M2–4 °र्णं) प्रेप्सुरभिद्रवत्

31 a) V1 B5 तमाद्रवंतं, B4 D3 समापतत (for तमा°) — b) S (except G1) वृषा — c) V1 B (except B1) D3 4 7 सुसक्रुद्धो (for [उ]रसि क्रुद्धो) — d) Dn1 स्तनांतर, S (except T2) परंतप (T1 °प) — e) G1. 2 कर्णश्च (for पुनश्च) B2 चैव (for चैनम्)

32 b) T3 G वादयामास (for छाद°) — c) K3 D8 T1 च शरैः; Dn1 D5 T2 3 G M1 च शितैः K4 D1 कर्णं, Dn1 T2 M2–4 बाणैः — d) Dn1 T2 M2–4 कर्णं नवभिरायसैः (Dn1 T2 °शुगैः)

33 a) M3 कर्णो M2–4 द्विधा (for धनुर्) — b) M2–4 धनुश्च (for द्विधा) V1 B1 3 D3 4 7 पत्रिभिः — c) D2 6 तया (for अथ) K3 V1 B Da1 Dn1 D1–5 7 8 S [ए]न, D6 [ए]व (for तं) — d) K3 अभिविध्यत्, V1 B Da1 Dn1 D3–5 7 8 S प्रत्य°; D1 प्रविध्यत (for अभ्यविध्यत्) — f) K3 विद्धा च रणभेदिना

34 c) K3 धर्मज्ञो, B2 सर्वांगो (for मर्मज्ञो) — d) V1 B Da1 Dn1 D1–5 7 8 T2 3 G विव्याध निशितैः; D6 विद्धाशु निशितैः — e) V1 Da1 D1. 5 6 8 T1 G2 M2–4 च बलवान्; G1 च बलान् — f) K3 B5 D3 मेदिनीं; V1 रोदसीं, Co रोदसी (as in text)

35 b) B (except B1) Da1 D3. 4. 7 नाराचेन (for °चाना) K3 B Da1 Dn1 D1–3 7 समार्पयत्; V1 D5. 8 S समर्पयत् (for समार्द°) — c) T3 G M रणे (for वने) — T2 om 35d–40a — d) D2 उल्वदस्त्रिव (for उल्काभिरिव)

36 T2 om. 36 (cf v l. 35) — a) Dn1 स कर्णबा*****, S (T2 om) स कर्णबाणाभि(T1 °णानि)हत° — b) Dn1 om. from पाण्डवः up to गि (in 37c). — d) Ś2 K4 V1 B (except B5) Da1 D1–7 सुतपुत्रवधेप्सया (D1 °प्सय, D5 ऽसया); S (T2 om.) °त्रजिघांसया

37 T2 om 37 (cf v l. 35) Dn1 om. up to गि (in 37c) (cf v l 36) — a) Ś1 K2 4 B5 D2–4 6 8 (before corr ) T1 कार्मुक, K1 कार्मुका, K3 कार्मुक- — d) K3 भर्त्तार (for सायक) D2 6 साध(D6 °य)कं समरे बली

38 T2 om 38 (cf v l. 35) — a) T3 G M2–4 आकृष्य — b) Ś2 K4 B2 3 अभि, K1 Co अधि, V1 D4 इति (for अति-) K3 आ कर्ण्यादपि चाहवं, T1 आकर्णं व महाबल, T3 G M आ कर्णांतमवि(M1 °पि)च्युत (M1 °त) — c) D6 स मुमोच, T3 G मुमोच च (for तं मुमोच) K3 महेष्वास

39 T2 om 39 (cf. v l. 35) — b) B2 वज्रसमस्वन; T1 वज्राशनिप्रभ — c) Ś1 K2 4 अद्रावयद्, Ś2 K1 व्यद्रावयद्; K3 V1 आहा(V1 °दा)रयद्, T1 व्यदारयद् (for अदा°) — d) K3 V1 B D S वज्रवेगो यथाचलं (Dn1 °बल)

2437 50 47 43 47 स भीमसेनाभिहतो सूतपुत्रः कुरूद्वह ।
निपसाद रथोपस्थे विसंज्ञः पृतनापतिः ॥ ४०
ततो मद्राधिपो दृष्ट्वा विसंज्ञं सूतनन्दनम् ।
अपोवाह रथेनाजौ कर्णमाहवशोभिनम् ॥ ४१
ततः पराजिते कर्णे धार्तराष्ट्रीं महाचमूम् ।
व्यद्रावयद्भीमसेनो यथेन्द्रो दानवीं चमूम् ॥ ४२

इति श्रीमहाभारते कर्णपर्वणि चतुस्त्रिंशत्तमोऽध्यायः ॥ ३४ ॥

## ३५

धृतराष्ट्र उवाच ।
सुदुष्करमिदं कर्म कृतं भीमेन संजय ।
येन कर्णो महाबाहू रथोपस्थे निपातितः ॥ १
कर्णो ह्येको रणे हन्ता सृञ्जयान्पाण्डवैः सह ।
इति दुर्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः ॥ २
पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे ।
ततः परं किमकरोत्पुत्रो दुर्योधनो मम ॥ ३
संजय उवाच ।
विभ्रान्तं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे ।
महत्या सेनया राजन्सोदर्यान्समभाषत ॥ ४

---

40 T2 om 40^a (cf v l. 35) — ^a) V1 G2 भीमसेनेनाभिहत — ^b) B1 om from पुत्र° up to सूत (in 41^b) Ś K2 भीमसेन (for सूतपुत्र°) Ś1 K1–3 कुरूद्वह°, V1 B6 Dn1 T2 कुरूत्तम (Dn1 °म); T3 G [अ]प्यरिंदम° K4 वीर प्रहरतां वर°, T1 M ग(T1 ह)तासुवदरिंदम (T1 M1 °म°) — ^d) K3 D3 नि(D3 नि°)सन्न° Dn1 T3 त्यक्तकार्मुक°, G1 2 पृथिवीपति° (for पृतना°) — After 40, T2 3 G ins

463* रुधिरेणावसिक्ताङ्गो गतासुवदरिंदम° ।

— After the above, S ins a passage given in App I (No 11)

41 B1 om up to सूत in (41^b) (cf v l 40) Before 41, T2 3 G1 3 ins संजय उवाच — ^a) T1 G1 2 M एव (for ततो) T3 G3 एव मद्राधिपं (G3 °प ) श्रुत्वा — ^b) D1 5 M4 सूतनदन — ^c) K1 (before corr.) अपोवाह्य (K1 by corr °य) (for अपोवाह) G2 रथे राजन् (for °नाजौ)

42 ^a) Dn1 S पराजिते तत (by transp) K3 — ^b) T1 G2.3 M1 धार्तराष्ट्र, K4 °राष्ट्रिं K1 T1 3 G1 2 M1–3 महाचमू (K1 °मू) — B2 om (hapl) 42^cd — ^c) Dn1 T2 अमेयात्मा (for भीमसेनो) T1 3 G M व्यपा(G1 2 अपा°, M1 व्यप)यात्सर्वतो भग्ना — ^d) D2 T2 महेन्द्रो (for यथेन्द्रो) B1 3 4 D3 7 दानवान्पुरा (B1 °न°) (for दानवीं चमूम्) T1 3 G M हाहाभूता (G1 M1 °ता°) समंतत°.

Colophon — *Day of Karna's Generalship* Ś2 K1 4 द्वितीययुद्धदिवसे — *Adhy name* Ś1 T2 M1 कर्णपराजय (Ś1 °भव ), Dn1 कर्णभीमसेनयोर्युद्धे कर्णपराजय°; T1 कर्णमोहन — *Adhy no* (figures, words or both) Ś2 34 (as in text), K1 35, B1 50, B4 M 46, D1 45, D4 31, D6 51, T G 47

### 35

1 ^a) D6 M1 कर्ण (for कर्म) — ^b) T3 G भीमसेनेन संजय — ^c) S महेष्वासो (for महाबाहू)

2 ^a) K4 कर्णो हेको K4 हर्ता (for हन्ता) — ^b) B1–4 Dn1 D3 4 7 8 S transp सृञ्जयान् and पाण्डवै° — ^c) D6 सूत — ^d) B5 अब्रवीत्, Da1 D1.5 S (T3 damaged) प्रोक्तवान् (for प्राब्रवीन्) Ś K1.2 4 चै; B5 च , Da1 D1 5 हि, G1 2 मे (for मां) Da1 D1 5 पुन पुन (for मुहुर्मुहु°)

3 ^a) Ś1 K2 पराजिते S (except T2) च (for तु) — K3 om. (hapl ) 3^b–4^a — ^c) B5 अत° (for तत°) G1 om पर

4 K3 om. 4^a (cf v l 3) — ^a) V1 B Da1 Dn1 D1 3–5 7 8 S विमुख (G2 °ख्रं), D2 विद्रुत (for विभ्रान्त). T1 M दृश्य, G2 पश्य (for प्रेक्ष्य) — ^b) D6 महामृधे; M1 °रथ (for °हवे) — ^c) K3 B5 Dn1 D2 6 8 T G2 3 M सार्धं, Da1 D1 5 राजा, G1 पार्थ (for राजन्) V1 दुर्योधनो महाराजन्, B1–4 D3 4 7 पुत्रस्तव महाराज — ^d) K3 सौदर्याम्, T2 सोदरान् (for सोदर्यान्) B5 अन्वभाषत, S इदमब्रवीत् (for समभाषत)

व्यगाहत रणे पार्थो विनिघ्नन्रथिनां वरः ॥ ४
निगृह्य तु रथानीकं कङ्कपत्रैः शिलाशितैः ।
आससाद रणे पार्थः सुशर्माणं महारथम् ॥ ५
स तस्य शरवर्षाणि ववर्ष रथिनां वरः ।
तथा संशप्तकाश्चैव पार्थस्य समरे स्थिताः ॥ ६
सुशर्मा तु ततः पार्थं विद्ध्वा नवभिराशुगैः ।
जनार्दनं त्रिभिर्बाणैरभ्यहन्दक्षिणे भुजे ।
ततोऽपरेण भल्लेन केतुं विव्याध मारिष ॥ ७
स वानरवरो राजन्विश्वकर्मकृतो महान् ।
ननाद सुमहन्नादं भीषयन्वै ननर्द च ॥ ८
कपेस्तु निनदं श्रुत्वा संत्रस्ता तव वाहिनी ।
भयं विपुलमादाय निश्चेष्टा समपद्यत ॥ ९
ततः सा शुशुभे सेना निश्चेष्टावस्थिता नृप ।
नानापुष्पसमाकीर्णं यथा चैत्ररथं वनम् ॥ १०
प्रतिलभ्य ततः संज्ञां योधास्ते कुरुसत्तम ।
अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव ।

---

K1 B3-5 वारयन्; D2 6 व्यधमत्, G1 [अ]साधयन्, M1 [अ]धारयत् (for धारयन्) B1 प्रभो T1 धारयञ्श्वेतवाहन — c) S (except T2) परान् (for रणे) — d) V1 Da1 Dn1 D1, 5 T2 रथिनो K3 B (except B5) D (except D2 6 8) T G M2-4 वरान्, M1 परान् (for वर°)

5 a) K1 विगृह्य, K3 V1 B D T2 विगाह्य (for निगृह्य) K1 V1 B1 2 D T2 तद् (for तु) B3 बलानीक (for रथा°) K2 4 निगृह्य तुरगानीकं, T1 3 G M विक्षोभ्य तुरगानीक — b) M3 शिलातलैः — c) K2 रथे, K3 B D2-4 7 S (except T2) तत (for रणे) — d) D8 वरायुध, D3 T1 M2 4 महारथ°

6 a) K4 शतस्य, T1 3 G2 3 तस्याथ (for स तस्य) — c) K1 om तथा Some MSS संसप्तकास् B3 पार्थं (for चैव). G1 2 रथैस्तु सगताश्चैव — d) Dn1 T2 प्रमुखे (for समरे) B1 2 4 5 D3 4 7 पार्थं बाणैः समा(B5 °म)र्पयत्; B3 बाणैरेव समार्पयन्

7 a) K4 [अ]पि (for तु) V1 तथा (for तत°) — b) B D3, 4 7 दशभिर् S (except T2) आयसैः (for आशुगैः) — d) K3 V1 B1 2 4 5 Da1 D1-5 7 8 अहनद्, B3 अदहद्, Dn1 अभ्यनद्, D6 अतुदद्, S अभ्यघ्नद् (T1 G1 °घ्नन्) T3 G करे (for भुजे) — D2 om from 7c up to सुमहन् (in 8c) — f) S (except T2) पार्थस्य (for विव्याध) K1 मारिप — After 7, S (except T2) ins

484* विव्याध समरे राजन्सुशर्मा क्रोधमूर्छित ।

8 D2 om upto सुमहन् (in 8c) (of v l 7) — c) K3 V1 B Da1 Dn1 D1 5-7 S सुमहानाद — d) K3 V1 B D T2 भी(D8 तो)पयाणो (for °यन्वै) K ननद च, B2 D6 ननर्त च (D6 ह), B1 3-5 D3 4 7 जगर्ज च, Dn1 D8 T2 जनास्तत° (T2 °व) (for ननर्द च) Co cites ननर्द (as in text) D2 ह (for च) T1, 3 G M नृत्यन्निव विभीषयन्

9 a) B5 तं, T1 च (for तु) — b) Ś2 T3 G3 वाहिनीं — c) K3 V1 B1 D3 4 7 आधाय, B3 Da1 Dn1 D1, 5 8 T2 M1 आस्थाय, T1, 3 G M2-4 आसाद्य D2, 6 कष्टेनैव समाधाय — d) D6 न चेष्टां B1, 4, 5 समजायत (for °पद्यत)

10 M om 10ab — b) B2 [अ]त्रस्थितौ; T1 आस्थिता (for [अ]वस्थिता) Dn1 T2 तदा (for नृप) K3 निश्चेष्टी समपद्यत — c) M2-4 कुशलैः शिल्पिभिर्न्यस्ता — d) Dn1 चैत्रक्षय, T G M1 चित्री(T1 2 M1 °त्र)कृत; M2-4 चित्रपटे (for चैत्ररथं) M2-4 तथा (for वनम्) K3 यथा चोत्तरसभव

11 a) Da1 D1, 5 पुनः (for तत°) — b) G2 M2-4 यौधास् B1 कुरुसत्तम, G1 2 नृपसत्तम — ef) K3 V1 B Da1 D1-8 तव (for तदा). Dn1 S सछाद्य समरे (Dn1 चरणे, T2 च शरैः) पार्थं परिवव्रु समतत — After 11, N ins

485* निगृह्य त प्रचुक्रुशुर्वध्यमाना शितैः शरैः ।

[Ś K4 निगृहीतु, K1 V1 °हीत, K2 Da1 D1 5 निग्रहीतुं, D2 6 निगृहीत (for निगृह्य त) Ś K1 2 4 प्रचक्रुश, Da1 D1 5 उपाक्रामन्, D2 परे चक्रु, D6 पराक्रामन् (for प्रचुक्रुशुर्) D2 6 बाध्य(D6 °ध)माना (for वध्यमाना) K3 D8 शितैः शरैर्वध्यमानास्त (D8 °स्ते) ग्रहीतु प्रचक्रमु . ]

D8 cont K4 Dn1 (reading line 2 after st. 14) D2 S ins after 12ab

486* निग्रहीतुमुपाक्रामन्क्रोधाविष्टा समन्तत ।
निगृह्य तं रथं तस्य योधास्ते तु सहस्रश ।

[D8 om line 1 — (L 1) K4 निग्रहीत, D2 S निगृहीत (T2 3 G1 M1 °तु) K4 उपाक्रामान्, S प्रच(T2 °चु)क्रुश K4 क्रोधाविष्टा — (L 2) Dn1 D8 S निगृह्य तु (D8 °ह्यतु, G1 °हीतु) M2-4 यौधास् Dn1 T3 G M1 [अ]थ, M4 च (for तु) Dn1 सहस्रश ]

Dn1 D8 S (lines 4 and 5 after st. 14) cont

487* रथबन्ध प्रचक्रुर्हि पाण्डवस्यामितौजस ।
रथमारुरुहु केचित्पार्थकृष्णौ जिघृक्षव ।
सशप्तकाना योधास्ते सिंहनादांश्च नेदिरे ।
स रथस्तैर्गृहीतस्तु पाण्डवस्य महात्मन ।
स्यन्दमानो नाशकत्तु तदद्भुतमिवाभवत् ।

परिवव्रुस्तदा सर्वे पाण्डवस्य महारथम् ॥ ११
ते हयान्रथचक्रे च रथेषाश्चापि भारत ।
निगृह्य बलवत्तूर्णं सिंहनादमथानदन् ॥ १२
अपरे जगृहुश्चैव केशवस्य महाभुजौ ।
पार्थमन्ये महाराज रथस्थं जगृहुर्मुदा ॥ १३
केशवस्तु तदा बाहू विधुन्वन्रणमूर्धनि ।
पातयामास तान्सर्वान्दुष्टहस्तीव हस्तिनः ॥ १४

ततः क्रुद्धो रणे पार्थः संवृतस्तैर्महारथैः ।
निगृहीतं रथं दृष्ट्वा केशवं चाप्यभिद्रुतम् ।
रथारूढांश्च सुबहून्पदातींश्चाप्यपातयत् ॥ १५
आसन्नांश्च ततो योधाञ्शरैरासन्नयोधिभिः ।
च्यावयामास समरे केशवं चेदमब्रवीत् ॥ १६
पश्य कृष्ण महाबाहो संशप्तकगणान्मया ।
कुर्वाणान्दारुणं कर्म वध्यमानान्सहस्रशः ॥ १७ C 8 2582 B 8. 53. 20 P 8 48 22

[(L 1) T1 रथवथ°, M2 रथ वधु T1 प्रक्षेत ; T2 प्रचक्रुशु T3 G3 [अ]मिनीजसा — (L 2) T3 G3 किंचित् G1 पार्थंनुप्रा — (L 3) Dn1 D2 ससप्तकाना M2-4 योधास् D2 सिंहनाद, M1 °दास् T2 ननादिरे (for च ने°) — (L 4) T1 रथस्थो, T2 M1. 3 °स्थैर्, M2 रथ तैर् T3 G3 पाटव सुमहामना (for the posterior half) — (L 5) Dn1 T2 स्पंदनो नागकहतु, T1. 3 G M स्त(G1 2 M स्य)दितु नागकठाजन (for the prior half) ]
Dn1 cont.

488* तत पार्थो महाबाहु संवृतस्तैर्महारथै ।
निगृहीत रथं दृष्ट्वा वाश्चाभिद्रवतो बहून् ।

On the other hand, D2 cont after 486*

489* रथचक्रं प्रचुक्रुशुस्ते सर्वे तत्र महाहवे ।

12 D2 om. 12 — a) B2 रथचक्रेण, T1 3 G1 2 °क्रे तु — b) K3 B2-4. 5 D (D2 om ) S रथे(D1 °थै)पा, V1 °शास्, B1 °शास B1 चैव, B3 पिष्टि; M2-4 वापि (for चापि) K3 B D (D2 om ) S (except T2) मारिष (for भारत) — After 12ab, K4 Dn1 D2 S ins 486* Dn1 T G M1 om. 12cd M2-4 transp 12cd and 13ab — c) K3 V1 सर्वे, B1. 3 5 Da1 D1 2-5 7 सर्वे (for तूर्णं) — d) V1 अयोश्चदन्, B1 Da1 D1-3 6 8 अयो न , D4 M2-4 अया(D4 °यो )नदन्

13 - M2-4 transp 12cd and 13ab — a) M अपरे सु(M1 परे सुसु)स्त्रुश्चैव — b) M4 केशमस्य M महाभुजं — c) D6 पार्थे (for पार्थम्) B3 om., Dn1 अन्यै, T1 G चैके, T2 M एके; T3 चैकैर् (for अन्ये) — d) T1 धर्मस्थं (for रथस्थ) Ś K2 4 प्रजह्रुर्, K1 प्रजहुं (for जगृहुर्)

14 a) K3 V1 Da1 Dn1 D1-7 ततो (for तदा) D7 T2 बाहून् (for बाहू) D2 केशवस्य (marg °श्च) महाबाहुर्, S अच्युतस्तु (T3 G °त स) महाबाहुर् (M1 °हू, M2-4 °हुं) — b) K1 विधुच (sic); K4 विधन्वन्, S (except G1) विधू° (for विधु°) Ś K1. 2 4 रथमूर्धनि — c) K3 पोथयामास K1 ता (for तान्) K1 3 सर्वा, D3 सर्वा — K3 om. 14d–15e — d) D3 भय (for दुष्ट-) K4 (sup lin as in text) हस्तिना, V1 B D S हस्ति(G3 °स्थि)पान् — After 14, Dn1 reads line 2 of 486* followed by 487* and 488*, while S reads lines 4–5 of 487*

15 K3 om 15abcde (cf v 1 14) — a) B1. 4 तत पार्थो रणे क्रुद्ध°, S तत पार्थो महाबाहु — b) K4 संमतस्; D6 मस्तृ° (for संवृ°) — Dn1 om 15cd — c) Ś1 G2 निगृहीतु — d) K4 केवल (for केशवं) B2 D2 [अ]तिद्रुतं (for [अ]भि°) T G1 3 M तांश्चाप्या(T1 वाश्च व्या°; T2 °श्चाभि-, G1 जनाश्च, M1 स ताश्च )द्रवतो बहून्, G2 मेनांश्चाद्रवतोत्मन — After 15cd, T2 repeats 15ab T2 om 15ef — e) Ś K1 2 4 रथ(Ś1 K2 °था)रूढास्, D1 रथं रू° V1 B1 4 Dn1 D2-4 7 M तु (for च) — f) D2 पदातीश् K3 युध्यमानाँश्च तापयन्, V1 पदातीना च पातयत्, B4 °तींश्चावपोथयत्, S (T2 om ) प(M1 पा)दातिश्च (G1 2 °स्वा) न्यपातयत्

16 a) K3 B Da1 D1-8 तथा (for ततो) Dn1 S अपातयदसंत्राव — b) D6 आच्छन्नयोधिभि°, T1. 3 G आमन्नयोधिन — After 16ab, Dn1 S ins

490* तास्तापयित्वा समरे पार्थ परपुञ्जय ।

[Dn1 T1. 2 M1 पातयित्वा, M2 च्याव°, M3 चाप°, M4 स्थाप° ]

— c) K2 B5 द्रावयामास, K4 V1 B1-4 Da1 D1-5 7 छाद°, D6 पात°, D8 योध°. Dn1 S स्मयन्निव महाबाहु — d) S वाक्यम् (for चेदम्)

17 a) T3 G यत (for पश्य) — b) Some MSS समसप्तकगणान K2 मयात्, B D2-4. 6 7 T1 3 G M बहून्; Dn1 T2 मृधे (for मया) — cd) V1 हन्यमानांस्तु सर्वशः (for d) Dn1 S कुर्वंतो(T2 °ता)दुष्कर कर्म सुमूर्धन्काल-चोदितान

हयान्रथांश्च समरे शस्त्रैः शतसहस्रशः ॥ ३२
वध्यमाने ततः सैन्ये विपुला भीः समाविशत् ।
संशप्तकगणानां च गोपालानां च भारत ।
न हि कश्चित्पुमांस्तत्र योऽर्जुनं प्रत्ययुध्यत ॥ ३३
पश्यतां तत्र वीराणामहन्यत महद्बलम् ।
हन्यमानमपश्यंश्च निश्चेष्टाः स्म पराक्रमे ॥ ३४
अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे ।
व्यभ्राजत रणे राजन्विधूमोऽग्निरिव ज्वलन् ॥ ३५
चतुर्दश सहस्राणि यानि शिष्टानि भारत ।
रथानामयुतं चैव त्रिसाहस्राश्च दन्तिनः ॥ ३६
ततः संशप्तका भूयः परिवव्रुर्धनंजयम् ।
मर्तव्यमिति निश्चित्य जयं वापि निवर्तनम् ॥ ३७
तत्र युद्धं महद्ध्यासीत्तावकानां विशां पते ।
शूरेण बलिना सार्धं पाण्डवेन किरीटिना ॥ ३८

इति श्रीमहाभारते कर्णपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

D8 4 7 निघ्नति तव वाहिनीं — c) T2 नरांश्च, T3 G पत्तीश्च; M पत्तींश्च (for रथाश्च) D2 पदाती रथिनश्छित्ता, D6 वान्हयान्रथिनश्छत्रं, T1 पत्तिश्च समरे पार्थः — d) B2 शब्दै; Da1 D1 5 शरै (for शस्त्रैः) K1 शरैश्च तमहस्रश (sic), S (except T2) शस्त्रवृष्ट्या न्य(T3 G ह्य, M2–4 व्य)पातयत् — After 32, T3 G3 ins

499* रराज समरे राजञ्शक्रो निघ्नन्निवासुरान् ।

33 a) B5 वध्यमान, Da1 D1 5 हन्यमाने; G1. 2 व्यय° B5 सैन्य — b) D8 विमुखे (for विपुला) G1 2 विपुलाभि (for °ला भीः) K3 विमुखे भीमिमाविशत् (sic), B D3 4 7 भय सुमहदाविशत् — Dn1 om 33cd — c) Some MSS संसप्तक° — d) Ś K1. 2 4 मारिष, S (except T2) सर्वश (for भारत). D6 बहूनां तत्र भारत — e) K3 V1 B D S transp कश्चिद् and तत्र — f) K3 V1 B2 3 Da1 Dn1 D3 7 T2 3 G2 3 प्रत्यविध्यत, D2 °युध्यते; D6 °योधयत्

34 a) K4 यत्र; D8 तव (for तत्र) — T1 om (hapl.) 34b–35a — b) K3 B1 3–5 D3 4 7 8 बल तव; Dn1 D2 6 बल महद् (by transp) B2 अहनत्तावकं बल — c) D6 हन्यमानान् V1 Da1 Dn1 D1 5 T2 बल चैव, B1 D6 अपश्याम, T3 G M च तदभून् (for अपश्यंश्च) — d) K3 V1 B1 5 Da1 Dn1 D3–5 7 T2 3 G2 3 M निश्चेष्टं, B3 D2 6 °ष्टाश्, D1 °ष्ट K1 स; B3 Dn1 D2 6 च, D1 त; T3 G वै (for स्म) D2 6 महामृधे (for पराक्रमे)

35 T1 om. 35a (cf v l 34) — a) T3 G2 3 वीराणा, M योधाना — b) D2 बली (for रणे) — c) T1 व्यभ्राजित, G1 विभ्राजत, G2 स बभ्राज, M2–4 व्यराजत (for व्यभ्रा°) K3 B Da1 Dn1 D3. 4 6–8 T2 M महाराज, V1 D1 2 5 तदा (for °तो) राजन् T1 3 G महाबाहुर् (for रणे राजन्)

36 b) D6 याति (for यानि) B3 Dn1 D3 4. 7 इष्टानि, D6 इसानि D2 दशिताना च भारत — c) Ś1 K2 अयुताश्, G2 °तांश् Dn1 रथनागायुत चैव — d) Ś1 D3 T1 3 त्रिसहस्रास्, Dn1 G2 त्रिसाहस्रान्, D6 त्रिसहस्रं Dn1 हयास्तथा, D6 हि दन्तिना, T1 G1 2 M च हस्तिनः (for च दन्तिन )

37 a) Some MSS. ससप्तका — b) Dn1 T2 परिवार्य (for °वव्रुर्) — c) K2 मंतव्य, V1 कर्तव्य (for मर्तव्यम्) — d) Dn1 D3 T2 3 G3 जयो, T1 G1. 2 M जये V1 D6 T1 G1 2 च (for वा) V1 B (except B3) D3 4 7 [अ]प्यनिवर्तन, D2 [अ]पि निवर्तने, T3 G3 M विनिवर्तन (for [अ]पि नि°)

38 a) T2 ततो (for तत्र) Dn1 महान् (for महद्) B D2–5 7 T2 चासीत्, Dn1 मासीत् (for ह्यासीत्) K3 V1 Da1 D1. 5 8 आसीत्तत्र महद्यु(Da1 D1 5 °द्दा यु)द्धं, T1 3 G M महदासीत्त(T1 °स्त्रि त)तो (T3 G1. 3 °दा; G2 °योर्) युद्ध — b) T3 G2 3 महीपते (विशा पते) — d) K1 M2 किरीटिनः, D2 6 रणाजिरे — After 38, T1 2 ins

500* जित्वा ताश्यहनत्पार्थः शत्रूञ्शक्र इवासुरान् ।

Colophon — *Day of Karna's Generalship* Ś2 K4 द्वितीययुद्धदिवसे — *Adhy name* Dn1 ससप्तकानां युद्धे, T2 अर्जुनसंशप्तकयुद्ध — *Adhy no* (figures, words or both) Ś1 K1 38, Ś2 37 (as in text), B1 D6 54, B2 46, B4 52, B5 54, Da1 64, D4 34, T1 3 G 51, T2 M 50

# ३८

संजय उवाच ।
कृतवर्मा कृपो द्रौणिः सूतपुत्रश्च मारिष ।
उलूकः सौबलश्चैव राजा च सह सोदरैः ॥ १
सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्दिताम् ।
समुज्जिहीर्षुर्वेगेन भिन्नां नावमिवार्णवे ॥ २
ततो युद्धमतीवासीन्मुहूर्तमिव भारत ।
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ॥ ३
कृपेण शरवर्षाणि विप्रमुक्तानि संयुगे ।
सृञ्जयाः शातयामासुः शलभानां व्रजा इव ॥ ४
शिखण्डी तु ततः क्रुद्धो गौतमं त्वरितो ययौ ।
ववर्ष शरवर्षाणि समन्तादेव ब्राह्मणे ॥ ५
कृपस्तु शरवर्षं तद्विनिहत्य महास्त्रवित् ।
शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः ॥ ६
ततः शिखण्डी कुपितः शरैः सप्तभिराहवे ।
कृपं विव्याध सुभृशं कङ्कपत्रैरजिह्मगैः ॥ ७
ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः । C. 8. 2817 B 8 54 8 K. 8 49 8

38

1 G1 om. the ref — b) B1 तु (for च) T3 G सूर्यवर्मा (G2 °र्म) महारथ — c) Ś2 K2 सुबलश्च Dn1 T2 सौबल सह पुत्रेण — d) K3 D3 सोदर, D2 6 सैनिकै Ś K1 2 4 B2 राजा चैव सहोदरै (K1 महोचरै sic)

2 a) M सीदंती वा (for सीदमाना) D6 सीदमानाश्च तान्दृष्ट्वा — b) K1 B1 G2 पाडुपुत्रभयार्चितं (B1 °र्दिदा ; G2 °र्दिता ), D6 पाडुपुत्रार्दितान्युधि — c) K3 B1.5 D8 समुज्जहार, V1 B2.4 Da1 Dn1 D1–3 5 7 M1 °जहु स (V1 सु-), B3 °जहाति; D4 अभिससु स, D5 उज्जिहीर्षवो, M2–4 समुज्जिहीर्षन् — d) B3 इवांबरे, T1.3 G1.3 इवाभमि (for इवार्णवे)

3 T1 3 G om. 3 — b) K3 मुहूर्ताद् (for °र्तम्) Da1 D1 दारुण (for भारत) — d) K3 च सुदारुहं (for हर्षवर्धनम्) — After 3, Dn1 T2 ins

501* भीमसेन सपाञ्चाल चेदिकैकेयसंवृतम् ।
वैकर्तन स्वयं युद्ध्वा वारयामास कार्मुकै ।
ततश्चेदिकरूषांश्च सृञ्जयांश्च महारथान् ।
कर्णो जघान संक्रुद्धो भीमसेनस्य पश्यत ।

[(L. 1) T2 च (for स-) T2 चेदिकेकयसंवृत (for the posterior half) — (L 2) T2 विद्ध्वा (for युद्ध्वा) T2 सायकै (for कार्मुकै) ]

4 a) D2 क्षपंतो (for कृपेण) K3 शरवर्षेण (for °वर्षाणि) — b) Ś2 B1.3 5 D3 4 7 T1.3 G3 प्रति(B3 T1.3 G3 °वि)मुक्तानि; V1 प्रयुक्तानि ह (*sup lin* च); G1 M4 विप्रयुक्तानि (for °मुक्तानि) D2 6 [अ]निकदा (for संयुगे) — c) K2.4 D8 सृजयान् (for °या) V1 B Da1 Dn1 D1–7 S संजयाश्छादयामासु — d) Ś K1.2 प्रजा इव, D2 5 T3 G2 3 M इव व्रजा (by transp ), D8 व्रजानिव; T1 इव मजान्, G1 इव प्रजा-

5 a) K3 V1 B (except B2) D2–4 7 8 च (for तु). D8 हृष्टो (for क्रुद्धो) — b) D2 गोतमं Ś K2 4 त्वरित — c) D2 6 उत्सृजन्, T3 G3 वारयन् (for ववर्ष) V1 Da1 Dn1 D1 5 T1.2 G1.2 M वार(T2 °स)-यन्शरवर्षेण — d) Ś2 एव ब्रह्मणे; K3 D8 ब्राह्मणं प्रति; V1 B2.5 Dn1 D3 4 7 T2 M द्विजपुंगवं; B1.3 4 एव ब्राह्मणं; Da1 D1 5 द्विजसत्तम, D2 व्यधमद्द्विजं, D6 व्यधमन्द्विजं; T1.3 G ब्राह्मणं कृप — After 5, T G ins.

502* महदासीत्तदा युद्धं मुहूर्तादिव दारुणम् ।
क्रुद्धयो समरे राजन्रामरावणयोरिव ।

[(L 1) G1.2 ततो (for तदा) T2 तयो समागमो घोर समजायत शूरयो — (L. 2) T2 सनयो (for समरे) T2 om राज ]

6 Ś K1–3 B3 D8 om. 6a–8b — a) K4 शरवर्षाणि, Dn1 °वर्षैस्तं (for °वर्षं तद्) V1 D2 S (except T1.2) त; D6 तु (for तद्) — c) Dn1 शिखंडिने, D8 शिखंडी च B8 रथे; D2 तत (for रणे)

7 Ś K1–3 B3 D3 om 7 (cf. v 1 6) — b) T3 G आयसै (for आहवे) — c) V1 D6 सुदृढं, T1.2 M कुपितं, T3 G समरे (for सुभृश)

8 Ś K1–3 B3 D3 om 8ab (cf. v. l. 6) — a) S (except T2) दृढ (T1 भृशं) क्रुद्ध (for शरैस्तीक्ष्णै) — b) T2 M1 सोभिविद्ध्वा महारथं — After 8ab, T1.3 G ins

503* ततस्तु निशितैस्तीक्ष्णै क्षुरप्रैर्हेमभूषणै ।

[T3 G3 स (for तु) T1 बाणै (for तीक्ष्णै ) G1.2 हेमभूषितै (for °भूषणै) ]

न्यश्वसूतरथं चक्रे पार्षतं तु द्विजोत्तमः ॥ ८
हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
चर्मखड्गे च संगृह्य सत्वरं ब्राह्मणं ययौ ॥ ९
तमापतन्तं सहसा शरैः संनतपर्वभिः ।
छादयामास समरे तदद्भुतमिवाभवत् ॥ १०
तत्राद्भुतमपश्याम शिलानां प्लवनं यथा ।
निश्चेष्टो यद्रणे राजञ्शिखण्डी समतिष्ठत ॥ ११
कृपेण छादितं दृष्ट्वा नृपोत्तम शिखण्डिनम् ।
प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः ॥ १२
धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति ।
प्रतिजग्राह वेगेन कृतवर्मा महारथः ॥ १३
युधिष्ठिरमथायान्तं शारद्वतरथं प्रति ।
सपुत्रं सहसेनं च द्रोणपुत्रो न्यवारयत् ॥ १४
नकुलं सहदेवं च त्वरमाणौ महारथौ ।
प्रतिजग्राह ते पुत्रः शरवर्षेण वारयन् ॥ १५
भीमसेनं करूषांश्च केकयान्सहसृञ्जयान् ।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ १६
शिखण्डिनस्ततो बाणान्कृपः शारद्वतो युधि ।
प्राहिणोत्त्वरया युक्तो दिधक्षुरिव मारिष ॥ १७
ताञ्शरान्प्रेषितांस्तेन समन्ताद्धेमभूषणान् ।

— c) V1 T1 न्यश्वसूत (for न्यश्वसूत-) Ś2 चक्रं (for चक्रे) — d) K2 तु द्विजोत्तमा, V1 M परवीरहा; Dn1 स तु वीरहा, T2 शत्रुवीरहा B Da1 D1 3–5 7 T1.3 G शिखंडिनमथो (T1 °थ) द्विज°

9 a) T1 रथो (for ततो) D6 राजन् (for यानाद्) D2 हताश्व शतशो राजन् — b) D2 5 महारथान् (D5 °थात्) — c) G1 2 खड्ग चर्म (G2 °र्मं) (for चर्मखड्गे) Ś2 खड्गेन (for खड्गे च) K3 B, D2–4 7 8 खड्ग चर्म तथा गृह्य; V1 Da1 Dn1 D1 5 T2 चर्म खड्ग च गृह्याजौ (Dn1 °ग्रैव), D6 चर्म खड्ग ततो गृह्य, T1.3 G3 खड्ग च चर्म (T1 चर्म च) वै गृह्य; M खड्ग चर्म च गृह्याजौ — d) T1 त्वरयन्; T3 G प्रत्वरन् (for सत्वर) V1 Da1 Dn1 D1 5 T2 M शिखंडी गौतमं ययौ

10 c) S (except T2) वारयामास (for छाद°).

11 T1 om 11 — a) B3 T2 3 G तद् (for तत्र) V1 Dn1 D8 M1 अपश्याम° — b) Dn1 शैलानां; D8 शलानां Dn1 पतन यथा; D6 प्रवणं यथा, S (T1 om) इव सर्पण — c) K3 D3 4 7 तद्रणे; T3 G ह्यभवद् (for यद्रणे) — d) K3 समवस्थित°, T3 G विष्ठितो बली (for समतिष्ठत).

12 a) Ś2 K1 2 B1 D1 5.6 [आ]च्छादित T1.3 G M वारित — b) T1 3 G शिखडिनमथो नृप (G3 °प) — c) Ś2 कृतं (for कृपं) — d) Ś2 K1 दृष्टद्युम्नो Da1 D1 5 महाबल° (for °रथ°)

13 T3 repeats 13–14 after 15[ab] — a) D8 दृष्टद्युम्न Ś2 Da1 D1.5 ततो या(Ś2 य)त, T3 G अथायांत — Ś K1.2 4 om (hapl) 13[c]–14[b]. — d) T1 3 G1 3 सहानुग°, G2 महाबल° (for °रथ°)

14 Ś K1.2 4 om 14[ab] (cf v l 13) For the repetition in T3, cf v l. 13 — a) T3 G ततो यांतं (for अथायान्तं) — b) K3 शारद्वतनयं (for °रथं) — c) V1 B1 3 Da1 Dn1 D2–4 7 8 T1 3 G1 सहसैन्यं; B1 3 °द्वेवं (for °सेन) — B3 om (hapl) 14[d]–15[c]. — d) T1 G1 3 भारद्वाजो; T3 G3 अश्वत्थामा (for द्रोणपुत्रो) B1 [ऽ]भ्यवारयत् (for न्यवा°)

15 B3 om 15[c] (cf v l 14) — b) Dn1 T2 G त्वरमाणो महारथ° — After 15[ab], T3 repeats 13–14 — d) T1 G1 3 शरवर्षाणि (for °वर्षेण) Ś1 M1 वारयत्, V1 वीर्यवान्

16 a) S करूशांश्च. — b) Dn1 D2 4 6–8 कैक(D4 6 8 °के)यान् K3 V1 B1.3 4 6 D2–4 6 7 सह सृञ्जयै°; B3 मत्स्यकेकयै°; Da1 D1 5 सृञ्जयै सह; Dn1 D5 S संजयांस्तथा (M1 °दा) (for सहसृञ्जयान्) — c) V1 युध्यन्; B1 राजन्, S (except T2) वीरो (for युद्धे) — d) M2 धारयामास (for वार°) V1 B3 सयुगे; Dn1 T2 M मारिष, T1 3 G तेजसा (for भारत)

17 a) V1 B2 3 D6 T2 G1 शिखंडिने; B1 Dn1 T1.3 G2 3 °डिनं, Da1 D1 5 8 °डिनि (for °डिनस्) G2 बाणैर् (for बाणान्) — b) G2 नृप (for कृप) — c) T1 3 G प्रेषयत् (for प्राहिणोत्) — d) K3 विधक्षुर्, K1 D6 भारत, K4 मारिष° Dn1 T2 M जिघांसुस्त महारथं (Dn1 °थ), T1 3 G बीभत्सो रथसंनिधौ

18 a) Ś2 प्रेषतास्, G1 प्रेषयास्; K1 प्रापितांस् (for प्रेषितास्) — b) B3 समस्तान्, T3 G3 सुपुत्तान् (for समन्ताद्) K3 B1 4 5 Dn1 D2–4.7 T2 स्वर्णभूषितान्; V1 Da1 D1 5 स्वर्णभूषणान्, B2 3 D8 हेमभूषितान्, T1 3 G M रुक्म(M2–4 रत्न)भूषितान् (for हेमभूषणान्) — c) Dn1

चिच्छेद खड्गमाविध्य भ्रामयंश्च पुनः पुनः ॥ १८
शतचन्द्रं ततश्चर्म गौतमः पार्षतस्य ह ।
व्यधमत्सायकैस्तूर्णं तत उच्चुक्रुशुर्जनाः ॥ १९
स विचर्मा महाराज खड्गपाणिरुपाद्रवत् ।
कृपस्य वशमापन्नो मृत्योरास्यमिवातुरः ॥ २०
शारद्वतशरैर्ग्रस्तं क्लिश्यमानं महाबलम् ।
चित्रकेतुसुतो राजन्सुकेतुस्त्वरितो ययौ ॥ २१
विकिरन्ब्राह्मणं युद्धे बहुभिर्निशितैः शरैः ।
अभ्यापतदमेयात्मा गौतमस्य रथं प्रति ॥ २२
दृष्ट्वाविपक्वं तं युद्धे ब्राह्मणं चरितव्रतम् ।
अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम ॥ २३
सुकेतुस्तु ततो राजन्गौतमं नवभिः शरैः ।
विद्ध्वा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः ॥ २४
अथास्य सशरं चापं पुनश्चिच्छेद मारिष ।
सारथिं च शरेणास्य भृशं मर्मण्यताडयत् ॥ २५
गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढम् ।
सुकेतुं त्रिंशता बाणैः सर्वमर्मस्वताडयत् ॥ २६
स विह्वलितसर्वाङ्गः प्रचचाल रथोत्तमे ।
भूमिचाले यथा वृक्षश्चलत्याकम्पितो भृशम् ॥ २७
चलतस्तस्य कायात्तु शिरो ज्वलितकुण्डलम् । C 8 2537 B 8 54 28 K 8 49 28

D5 आविध्यन् (D5 °त्) — d) Ś K3 भ्रमयन् V1 B1 5 Da1 Dn1 D1.5 6 T2 चर्म चोत्तम (for च पुन पुन)

19 a) K2 B3 Dn1 D2 3 7 8 T2 M च तच्, D4 च त, T1 3 G तदा (T1 °था) (for ततश्) — b) T1 3 G ब्राह्मण (for गौतम) V1 B. Dn1 D5 (before corr) S तस्य (D5 °स्य) मारिष, B1 Da1 D1 3–5 7 तस्य भारत (for पार्षतस्य ह) Ś K च (for ह) — c) D2 3 तीक्ष्णैस् (for तूर्णं)

20 a) Ś K1.2 D1 विवर्मा, K3 सुवर्मा, B2 3 G3 विचर्म — b) B1 उपानिशत्, B2 अदृश्यत; T1 3 G अभिद्रवत् (for उपा°) — c) D6 आयातो (for आपन्नो) T1 3 G कृपस्तं शरसघातैर् — d) K4 T2 मृत्युरास्यम् T1 3 G आ(T3 प्रा)द्रवतमपीडयत् (T1 °भिद्रवत्)

21 a) D6 शारद्वत (for °द्वत) B2 ग्रस्त, T2 उग्रै (for ग्रस्त) — b) Ś K1 2 4 B3 D6 कृष्यमाण (for क्लिश्यमान) K3 B1 D2.4 7 महाबल, V1 B5 Da1 Dn1 D1 5 M शिखण्डिनं, B3 महारथ, T1 3 G महारणे (for °बलम्) — c) S (except T2) दृष्ट्वा (for राजन्) K4 चित्रकेतुस्ततो राजन्; D6 °तुर्महाराज — d) B3 त्वरित G2 यथा (for ययौ)

22 a) Dn1 D5 S स किरन्, D1 3 विकरन् G1 ब्राह्मणे K4 युद्ध — T3 repeats 22c–33b after 33ab — c) T1 G1 2 अभ्यगच्छद्, T2 G3 अभ्यद्रवद् (for अभ्यापतद्) — d) T1 3 G शारद्वतरथं रणे

23 a) K3 V1 B2 4 5 Da1 Dn1 D1 4 8 S विपक्तं, K4 D6 विपन्न, B3 वियुक्त; D2 4 7 च यु(D4 मु)क्त V1 युद्धार्थे, B (except B5) Da1 Dn1 D1 5 T2 M तद्युद्ध (T2 °द्धे), D8 तरमन्य, T3 G3 त क्रुद्धो (for त युद्धे) — b) K4 चरित व्रत, B2 4 Dn1 D5 T1.3 G M च (B4 चा-) निवारित, B5 D6 विनिवारितं, T2 चापि वारित (for चरितव्रतम्) — c) D2 G1 अपायातं (G1 °तस्) G3 अपायातश्च तत्तूर्णं (sic) — d) D2 सुकेतुस (for शिखण्डी) K4 D5 राजसत्तम, D2 6 तत्र मारिष, T2 चापि सभ्रमात्

24 a) D6 महाराज; T1.3 G [अ]थ राजेंद्र (for ततो राजन्) — b) Da1 D1 5 T1.3 G निशितै (for नवभि) — Ś K1 2 om. (hapl) 24cd — c) S विंशत्या (for सप्तत्या) — d) K4 B3 5 6 D6 T2 G3 पुनश्चैव (K4 B5 G3 °व), V1 धनुश्चैव T2 त्रिभि (for शरै)

25 a) M2–4 तथास्य D4 सरथ, D6 समरे (for सशर) — b) D4 शरैश्च (for पुनश्च) — c) B3 पुनश्चास्य, Dn1 रणे तस्य, M शरैरस्य (for शरेणास्य) T1.3 G1 2 सारथिं वाहनान्त्रा (T3 G1 °न रा)जन्, G3 सारथिन वाहनं राजन् (hypermetric) — d) T1 3 G तस्य Ś1 K1 2 B1 T1 G2 3 मर्माणि; V1 B1 4 Dn1 D2–4 7 8 M मर्मसु, T3 G1 चर्म(G1 °र्मा)णि (for मर्मणि) — After 25, T3 G read 39

26 Ś K1 2 om (hapl.) 26 — b) T1 2 G1 पर, T3 G2 3 [अ]पर (for नव) V1 (marg as in text) बल (for दृढम्) — c) K4 सकेतु T1 निशितैर् (for त्रिंशता) K3 B1 2 4 Dn1 D6 8 भल्लै (for बाणै) — d) T2 3 G2 3 मर्माणि

27 b) V1 B5 महारथ, B1 D2 रथोत्तम, D6 रथोपरि (for रथोत्तमे) — c) Ś K1 2 4 भूमिस्थले, K3 V1 B Da1 Dn1 D1 3–5 7 8 S °कपे (for °चाले) — d) K3 V1 B1 3 5 D T1 3 G M चचाल, B4 चलते (for चलति) B1 5 D2–4 8 T1 3 कंपितो D5 (marg) कंपते वै समतत, T2 चचाल भृशविक्षत

28 a) D3 T3 G3 चलितस् T1 3 G1.2 तु तस्य कायात् (for तस्य कायात्तु) G3 चलितस्य च तत्र कायात् (hypermetric) — b) K3 ज्वलितकुतलं — d) K3

37 28 सोष्णीषं सशिरस्त्राणं क्षुरप्रेणान्वपातयत् ॥ २८
29 तच्छिरः प्रापतद्भूमौ श्येनाहृतमिवामिषम् ।
ततोऽस्य कायो वसुधां पश्चात्प्राप तदा च्युतः ॥२९
तस्मिन्हते महाराज त्रस्तास्तस्य पदानुगाः ।
गौतमं समरे त्यक्त्वा दुद्रुवुस्ते दिशो दश ॥ ३०
धृष्टद्युम्नं तु समरे संनिवार्य महाबलः ।
कृतवर्माब्रवीद्धृष्टस्तिष्ठ तिष्ठेति पार्षतम् ॥ ३१
तदभूत्तुमुलं युद्धं वृष्णिपार्षतयो रणे ।
आमिषार्थे यथा युद्धं श्येनयोर्गृद्धयोर्नृप ॥ ३२
धृष्टद्युम्नस्तु समरे हार्दिक्यं नवभिः शरैः ।
आजघानोरसि क्रुद्धः पीडयन्हृदिकात्मजम् ॥ ३३
कृतवर्मा तु समरे पार्षतेन दृढाहतः ।
पार्षतं सरथं साश्वं छादयामास सायकैः ॥ ३४
सरथश्छादितो राजन्धृष्टद्युम्नो न दृश्यते ।
मेघैरिव परिच्छन्नो भास्करो जलदागमे ॥ ३५
विधूय तं बाणगणं शरैः कनकभूषणैः ।
व्यरोचत रणे राजन्धृष्टद्युम्नः कृतव्रणः ॥ ३६
ततस्तु पार्षतः क्रुद्धः शस्त्रवृष्टिं सुदारुणाम् ।
कृतवर्माणमासाद्य व्यसृजत्पृतनापतिः ॥ ३७
तामापतन्तीं सहसा शस्त्रवृष्टिं निरन्तराम् ।

---

$B_{1.4}$ $D_{2.4\,7}$ त्वपातयत्, $V_1$ $B_{3\,5}$ $Da_1$ $Dn_1$ $D_{1\,8}$ S न्यपा°; $B_2$ त्वपाहरत्, $D_{3\,6}$ [अ]न्वताडयत्, $D_8$ [अ]भ्यपातयत् (for [अ]न्व°)

29 $^a$) $K_4$ प्रपतद्, $M_{2-4}$ न्यपतद् — $^b$) $K_4$ $Dn_1$ श्येनाहृतम्, $B_1$ सेनाहृतम् — $^d$) $T_3$ $G_3$ ततश् (for तदा) $V_1$ B $Dn_1$ $D_{2\,4,7\,8}$ $G_1$ M [अ]च्युत, $T_3$ [अ]द्रुत, $G_2$ च्युतं $Da_1$ $D_{1.5}$ पश्चाद्गमद्राच्युत°, $D_8$ पश्चात्प्रपतदाच्युत°, $D_6$ पश्चात्समापतद्विभो

30 $^b$) $D_8$ न्यस्तस्; $T_{1\,8}$ $G_3$ पुत्रास् (for त्रस्तास्) $D_2$ तत्र (for तस्य) $B_{1\,4}$ $D_{4\,7}$ पुरोगमा°, $B_2$ तदानुगा° (for पदा°) — $^c$) $G_1$ गौतम — $^d$) $B_3$ समतत (for दिशो दश) S (except $T_2$ $M_1$) दिशस्ते विप्रदुद्रुवु°

31 $^a$) $Ś_1$ (marg as in text) $K_3$ $B_1$ $M_4$ धृष्टद्युम्नस् $V_1$ च (for तु) — $^b$) $B_{2-4}$ $Dn_1$ $D_8$ $T_2$ परिवार्य (for संनि°) $K_3$ $V_1$ $B_5$ $Da_1$ $D_{1-5\,7}$ $T_3$ $G_{1\,3}$ महारथ°, $B_2$ समतत°, $B_{3\,4}$ $D_6$ महाबल, $Dn_1$ $D_8$ $T_{1\,2}$ $G_2$ M °रथ (for °बल) $B_1$ हार्दिक्यं नवभि° शरै° (= $33^b$) — $^c$) $V_1$ $B_5$ $Da_1$ $D_{1\,5}$ $M_{2-4}$ [अ]नदद्, $Dn_1$ $D_8$ T G $M_1$ नदन् (for [अ]ब्रवीद्) $Ś_1$ $K_4$ $V_1$ धृष्ट, $B_2$ वीरस्, $Dn_1$ S (except $M_1$) हृष्टस् — $^d$) $K_3$ $B_{1\,3\,4}$ $Da_1$ $D_{2-5\,7}$ भारत, $V_1$ $B_5$ $Dn_1$ $D_{1\,2\,8}$ S चाब्रवीत्, $B_2$ चासकृत् (for पार्षतम्)

32 $^a$) $D_8$ तुमलं — $^b$) $Dn_1$ $D_8$ T $G_3$ $M_1$ सदा, $M_{2-4}$ तथा (for रणे) — $D_8$ om (? hapl) $32^c$–$33^b$ — $^c$) $K_1$ आमिषार्थं $K_2$ तथा, $K_3$ भवेद् (for यथा) — $^d$) $Dn_1$ $T_2$ M क्रुद्धयोर् (for श्येनयोर्) $K_3$ $V_1$ B $Da_1$ $D_{3-5\,7}$ $T_{1\,3}$ G क्रुद्धयोर्, $Dn_1$ $T_2$ M श्येनयोर्, $D_{2\,6}$ हंसयोर् (for गृद्धयोर्) $K_3$ यथा, $D_2$ (sup lin as in text) $_6$ $M_1$ इव (for नृप)

33 $D_8$ om $33^{ab}$ (cf v l. 32) — $^a$) $D_6$ च (for तु) — After $33^{ab}$, $T_3$ repeats $22^c$–$33^b$ — $^d$) $D_2$ हृदि सायकैः; $T_{1.3}$ G M इव सात्वतं ($T_3$ $G_3$ °त°), $T_2$ हार्दिकात्मज (for हृदि°)

34 $^a$) $M_1$ सुसमरे (for तु समरे) — $^b$) $B_5$ समाहत° (for दृढा°) — $^c$) $T_1$ समरे (for सरथं)

35 $^a$) $D_6$ स शरैस्, $T_2$ स तदा; $M_2$ सरथं $K_3$ कृतवर्मोच्छादितो राजन् (hypermetric), $V_1$ $Dn_1$ $D_5$ स रथे छादिते राजन्, $T_1$ शरसञ्छादितो राजा, $T_3$ G कृतवर्मा शरैश्छन्नो — $^b$) $K_3$ धृष्टद्युम्नेन दृश्यत (sic), $V_1$ $Da_1$ $Dn_1$ $D_{1\,5}$ पार्षतो न व्य($Dn_1$ प्र)दृश्यत, $D_8$ पार्षतो न व्यदृश्यत; M न व्यदृश्यत मारिष — $^c$) $Dn_1$ घनै° (for इव) $K_4$ $Dn_1$ $D_8$ परिच्छिन्नो — $^d$) $K_3$ $V_1$ B $Da_1$ $D_{1-5\,7}$ S जलधारि($T_3$ G °राशि)भि°, $Dn_1$ $D_8$ °दैरिव, $D_3$ °दैर्यथा (for °दागमे)

36 $^a$) $Da_1$ $Dn_1$ $D_{1\,5\,8}$ S तान्बाणगणान् — $^b$) $T_2$ बाणै° (for शरै°) Ś $K_{1\,2\,4}$ काचनभूषणै°, $B_1$ कनकदूषणै (for °भूषणै) — $^c$) $V_1$ व्यराजत (for व्यरोचत). — $^d$) $Ś_1$ $D_2$ कृतमत°; $T_2$ प्रतापवान्, $G_1$ कृतव्रणा $T_3$ $G_3$ पार्षत° परवीरहा

37 $^a$) $V_1$ स तत°, $Da_1$ $Dn_1$ $D_{1\,5\,8}$ $T_2$ तत° स (for ततस्तु) — $^b$) Ś $K_{1-3}$ $V_1$ $B_5$ $D_{2\,8}$ $T_2$ $M_{2-4}$ शरवृष्टिं, $Dn_1$ शस्त्रविष्टं (for शस्त्रवृष्टिं) $T_2$ om (hapl) from सुदारुणा up to शस्त्रवृष्टिं (in $38^b$) $V_1$ $Dn_1$ $D_3$ M दुरासदा; $D_2$ च दारुणा (for सुदा°) — $^c$) $Da_1$ $Dn_1$ $D_{1\,5}$ उद्दिश्य (for आसाद्य)

38 $T_2$ om up to शस्त्रवृष्टिं (in $38^b$) (cf v l. 37) — $^a$) $K_3$ $M_1$ तम् $K_4$ $D_1$ आपतती — $^b$) $V_1$ $Dn_1$ $D_5$ शरवृष्टिं (for शस्त्र°) $K_3$ $V_1$ $B_{1-4}$ $D_{2-4\,6\,7}$ $T_{1\,3}$ G $M_1$ सुदारुणा, $B_5$ $Da_1$ $Dn_1$ $D_{1\,5\,8}$ $T_2$ $M_{2-4}$ दुरासदा (for निरन्तराम्) — $^d$) $T_1$ स्यालको; $T_3$ G सात्वतो (for हार्दिक्यो) $V_1$ $B_{1\,5}$ $Da_1$ $D_{1,5}$ $T_{1\,5}$ G [ऽ]वारयद् (for

शरैरनेकसाहस्रैर्हार्दिक्यो व्यधमद्युधि ॥ ३८
दृष्ट्वा तु दारितां युद्धे शस्त्रवृष्टिं दुरुत्तराम् ।
कृतवर्माणमभ्येत्य वारयामास पार्षतः ॥ ३९
सारथिं चास्य तरसा प्राहिणोद्यमसादनम् ।
भल्लेन शितधारेण स हतः प्रापतद्रथात् ॥ ४०
धृष्टद्युम्नस्तु बलवाञ्जित्वा शत्रुं महारथम् ।
कौरवान्समरे तूर्णं वारयामास सायकैः ॥ ४१
ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन् ।
सिंहनादरवं कृत्वा ततो युद्धमवर्तत ॥ ४२

इति श्रीमहाभारते कर्णपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

# ३९

संजय उवाच ।
द्रौणिर्युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितम् ।
द्रौपदेयैस्तथा शूरैरभ्यवर्तत हृष्टवत् ॥ १
किरन्निषुगणान्घोरान्स्वर्णपुङ्खाञ्शिलाशितान् ।
दर्शयन्विविधान्मार्गाञ्शिक्षार्थं लघुहस्तवत् ॥ २
ततः खं पूरयामास शरैर्दिव्यास्त्रमन्त्रितैः ।
युधिष्ठिरं च समरे पर्यवारयदस्त्रवित् ॥ ३
द्रौणायनिशरच्छन्नं न प्राज्ञायत किंचन । C 8 2453 B 8 35.4 K 8 50.4

---

व्यधमद्) D2-4 शरैः, D7 क्षुरैर् (for युधि) — T1 3 G ins a passage given in App I (No 13) after 38, T2 ins it after 39[cd]

39 T1 om 39–40 T3 G read 39 after 25 — [a]) Da1 च (for तु) K3 V1 B D S (T1 om) वारितां (for दारितां) — [b]) Ś K1.2 4 V1 B3 D3.4 शरवृष्टिं (for शस्त्र°) Ś1 K3 4 V1 B1.2 4.5 Da1 Dn1 D1.2-5 T3 3 G2 3 M दुरासदा, K2 दुरतरा, K4 दुरुत्तमां, B3 D2 G1 सुदारुणा (for दुरुत्तराम्) — T3 reads 39[cd] after 40 — [c]) B3 D2-4.7 आसाद्य (for अभ्येत्य) — For 39[cd], Dn1 D5 M subst T2 ins after 39[ab]

504* हार्दिक्यं छादयामास पार्षतो निशितैः शरैः ।
[M वारयामास (for छाद°) M1 3 नर्पतो (for पार्षतो) ]

40 T1.3 G om 40 (for T2, cf v 1 39) — [a]) V1 Dn1 T2 M सहसा, D3 भल्लेन (for तरसा) — [c]) Dn1 D5 T2 विद्ध(T2 छिन्न)गात्रस्तु (for शितधारेण) — [d]) Dn1 D5 हत स (for स हत) B3 प्राद्रवद् (for प्रापतद्) Ś1 रथं, D2 भुवि, D4 रथान् (for रथात्) K1 स हता प्राप भद्रथत् (sic) — After 40, T2 reads 39[cd] followed by App I (No 13)

41 [a]) Ś1 K1 4 हि, K3 om (for तु) D5 T2 बलिन, T1.3 G M समरे (for बलवान्) — [b]) B3 छित्वा, G1 2 हित्वा (for जित्वा) K3 4 शत्रून्, G2 सार्धं B (except B5) D2-4 7 महायलं (D2 °ले), D5 G2 °रणे, T3 G1 3 M3 4 °रथ (for °रथम्) — [d]) T3 G कालयामास (for वार°) D5 पत्रिभिः (for सायकैः)

42 [a]) T1 G1.2 तु (for ते) G2 M योधा — [b]) K1 समपाद्रवन्, T G अभि° (for उपा°) — [c]) D7 सिंहनाद रवः S (except T1) °नादरवांश्च (for °नादरवं) T1 3 G2 3 चक्रुस्, G1 चात्र (for कृत्वा)

Colophon — *Day of Karna's Generalship* Ś1 K1.4 द्वितीय(K4 °ये)युद्धदिवसे — *Adhy name* B3 कृपेण सुकेतुवधः, T2 M1 कृतवर्मपराजयः — *Adhy no* (figures, words or both) Ś1 38 (as in text), K1 39, B1 54, B3 47, B4 53, B5 D5 55, Da1 65, D1 49, D4 35, T1 3 G 52, T2 M 51

## 39

1 [b]) Dn1 D5 [अ]भिपालितं, M3 4 °रक्षितुं (for °रक्षितम्) T1.3 G M1.2 युयुधानेन रक्षितं — [c]) Ś K1 2 4 हृष्टैर् (for शूरैर्)

2 V1 reads 2 on marg — [b]) S (except T1) हेमपुङ्खान् (for स्वर्ण°) — [d]) K3 शिलाश्च; B Da1 D1 3-5 7 शिक्षाश्च, T1 3 G M शिक्षया (for शिक्षार्थं) V1 द्रौणिः परपुरंजयः, Dn1 D5 T2 शिक्षाबलसमन्वितान्, D2 6 शिक्षा स नरपुंगवः (D2 °वान्)

3 [ab]) V1 Da1 D1.5 स तु (for ततः) D3 6 सपूरयामास (for खं पूर°) Dn1 D5 T2 स (D5 marg ख, T2 सं) पूरयामास शरैर्दिव्यास्त्रप्रतिमन्त्रितैः, T1.3 G M स पूरयञ्शरैस्तीक्ष्णैर्वेगवद्भिः समंततः — [c]) S (except T2) युधिष्ठिरस्य (for °रं च) — [d]) Dn1 D5 T2 पर्यवारयत, B1-4 D3 4 7 परिवार्य महास्त्रवित्, T1.3 G M दिशः सर्वाः समावृणोत्

4 [a]) Ś1 K3.4 V1 B1 5 D2 7.8 द्रौणायनि- Dn1

2055 55 4 50 4 बाणभूतमभूत्सर्वमायोधनशिरो हि तत् ॥ ४
बाणजालं दिविष्ठं तत्स्वर्णजालविभूषितम् ।
शुशुभे भरतश्रेष्ठ वितानमिव विष्ठितम् ॥ ५
तेन छन्ने रणे राजन्बाणजालेन भास्वता ।
अभ्रच्छायेव संजज्ञे बाणरुद्धे नभस्तले ॥ ६
तत्राश्चर्यमपश्याम बाणभूते तथाविधे ।
न स्म संपतते भूमौ दृष्ट्वा द्रौणेः पराक्रमम् ॥ ७
लाघवं द्रोणपुत्रस्य दृष्ट्वा तत्र महारथाः ।
व्यस्मयन्त महाराज न चैनं प्रतिवीक्षितुम् ।
शेकुस्ते सर्वराजानस्तपन्तमिव भास्करम् ॥ ८
सात्यकिर्यतमानस्तु धर्मराजश्च पाण्डवः ।
तथेतराणि सैन्यानि न स्म चक्रुः पराक्रमम् ॥ ९
वध्यमाने ततः सैन्ये द्रौपदेया महारथाः ।
सात्यकिर्धर्मराजश्च पाञ्चालाश्चापि संगताः ।
त्यक्त्वा मृत्युभयं घोरं द्रौणायनिमुपाद्रवन् ॥ १०
सात्यकिः पञ्चविंशत्या द्रौणिं विद्ध्वा शिलीमुखैः ।
पुनर्विव्याध नाराचैः सप्तभिः स्वर्णभूषितैः ॥ ११
युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः ।
श्रुतकर्मा त्रिभिर्बाणैः श्रुतकीर्तिस्तु सप्तभिः ॥ १२
सुतसोमश्च नवभिः शतानीकश्च सप्तभिः ।

---

-च्छिन्न, D6 -च्छन्ने (for -च्छन्न) T1 3 G M भारद्वाजशरैश्छ- (T1 °श्छि )न्न, T2 द्रौणायविशिखश्छिन्न — $^{b}$) Ś1 V1 D3 S प्रज्ञायत — $^{d}$) Ś1 हि तम्, K2 ह तत्, B Dn1 D2–5 7 8 T1 3 G M महत्, T2 महान् (for हि तत्)

5 $^{a}$) B (except B6) D2–4 6 7 द्वि(D6 अ)विच्छन्नं, Dn1 D8 विसृष्ट त, T1 3 G M दिवि(वि)स्थ तत्, T2 °स्पृष्ठाव (for °ष्ठ तत्) K3 तद्बाणजाल विविधं — $^{b}$) Dn1 D8 T1 2 M स्वर्णपुंख , T3 G °पुंखैर् (for °जाल-) — $^{d}$) S (except M1) विमानम्, Co वितानम् (as in text) Ś K1 2 वेष्टित, K3 V1 B (except B1) Dn1 D3 4 7 8 धिष्ठित, K4 चेष्टित; D1 विष्टर, D2 6 विसृ(D6 °स्तृ )तं (for विष्ठितम्)

6 $^{a}$) B (except B5) D2–4 6 7 छन्नं; T3 G छन्नो (for छन्ने) B (except B5) D3 4 7 नभो (for रणे) — $^{b}$) M1 बाणमालेन B1 3 Da1 D1 5 भारत, Dn1 शाश्वता (for भास्वता) — $^{d}$) V1 D1 बाणयुद्धे, Dn1 D8 T2 ततो रुद्धे, T1 3 G M हृतरश्मि° (for बाणरुद्धे) T1 M तमोनुद°, T3 G दिवाकर° (for नभस्तले) D6 बाणरुद्धं नभस्तलं

7 $^{a}$) S (except T2) तद(M1 °म)द्भुतम् (for तत्राश्चर्यम्) D3 8 अपश्यामो, T2 न पश्याम — D8 T2 om $7^{bc}$ — $^{b}$) K1 M4 om , T1 3 G M1–3 नभस्थ(M2 3 °स्त)ले (for तथाविधे) — $^{c}$) G1 M4 संपततो, Co °ते (as in text) V1 B D (D3 om ) S (T2 om ) भूतं (for भूमौ) — $^{d}$) S transp दृष्ट्वा and द्रौणे D1 द्रौणि (for द्रौणे° ) K4 B1–4 Dn1 D3 4 7 किंचिदेवा( B4 °दप्य)-सरि(B1–3 D4 °री)क्षगं — After 7, K4 reads 9, repeating it in its proper place

8 Ś1 K3 V1 B1 4 5 D S transp 8 and 9 K1 om (hapl ) 8 B3 om (hapl.) $8^{a}$–$10^{b}$ — $^{b}$) T1 M3 4 महारथ ; M1 पराक्रम (for महारथा° ) — K3 B3 M1 om $8^{cdef}$ — $^{c}$) G2 विस्मयत — $^{d}$) Dn1 चैवं, D5 चैते (for चैन) Ś1 प्रतिवीक्षित, V1 B1 4 5 D S (M1 om ) प्रत्युदीक्षितुं (G2 °तं)

9 B3 om 9 (cf v l 8) Ś1 K3 V1 B1 4, 5 D S transp 8 and 9 K4 reads 9 for the first time after 7 — $^{a}$) D5 च (for तु) — $^{b}$) Da1 D1 5 धर्मपुत्रस्र B5 Da1 D1 5 M2–4 तु (for च) — $^{c}$) T3 G3 सर्वाणि (for सैन्यानि) — $^{d}$) B2 पराक्रमत् K4 दृष्ट्वा द्रोणे° पराक्रम

10 B2 3 om $10^{ab}$ (for B3 cf v l. 8) — $^{a}$) V1 तु तत्; T1 G1 2 M2–4 तथा; T3 G3 महा- (for तत° ) — $^{c}$) D1 धनराजश्च (for धर्म° ) — $^{d}$) K3 B5 D7 पंचालाश्च, G1 पांचाल्यश्च. G2 संनता (for संगता° ) — $^{e}$) K4 मृत्युं भयं — $^{f}$) K1 3 T1 3 G1 3 M2–4 द्रोणायनिम् T2 द्रौणिं ते समुपाद्रवन्

11 $^{a}$) K3 V1 B D (except Dn1 D8 ) सप्तविंशत्या — $^{b}$) B1 om विद्ध्वा D8 शिलाशितै° (for शिलीमुखैः) — $^{c}$) K4 पुनर्व्याविध्य (sic) (for पुनर्विव्याध) — $^{d}$) M1 om सप्तभि° T1 सर्वत्र (for सप्तभि° ) Ś1 K1 T1 3 G स्वर्णभूषणै°, B2 °पुंखितै , D2 6 सप्तभि° शरै (D6 शितै° ) (for स्वर्णभूषितै° )

12 $^{a}$) Dn1 D8 T2 3 G3 तु, D6 च (for त्रि-) — $^{b}$) K3 त्रि° (for च) — Ś K1 2 read $12^{cd}$ after $24^{ab}$ S (except T2) transp $12^{cd}$ and $13^{ab}$ — $^{c}$) Dn1 श्रुतवर्मा; T2 कृतकर्मा, M1 श्रुतकर्म — $^{d}$) K3 V1 B D S च (for तु) V1 B5 Da1 Dn1 D1 5 T2 पचभि° (for सप्तभि )

13 S (except T2) transp $12^{cd}$ and $13^{ab}$. V1

अन्ये च बहवः शूरा विव्यधुस्तं समन्ततः ॥ १३
सोऽतिक्रुद्धस्ततो राजन्नाशीविष इव श्वसन् ।
सात्यकिं पञ्चविंशत्या प्राविध्यत शिलाशितैः ॥ १४
श्रुतकीर्तिं च पञ्चभिः सुतसोमं च पञ्चभिः ।
अष्टभिः श्रुतकर्माणं प्रतिविन्ध्यं त्रिभिः शरैः ।
शतानीकं च नवभिर्धर्मपुत्रं च सप्तभिः ॥ १५
अथेतरांस्ततः शूरान्द्वाभ्यां द्वाभ्यामताडयत् ।
श्रुतकीर्तिस्तथा चापं चिच्छेद निशितैः शरैः ॥ १६
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
द्रौणायनिं त्रिभिर्विद्ध्वा विव्याधान्यैः शितैः शरैः १७
ततो द्रौणिर्महाराज शरवर्षेण भारत ।
छादयामास तत्सैन्यं समन्ताच्च शरैर्नृपान् ॥ १८
ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम् ।
द्रौणिश्चिच्छेद विहसन्विव्याध च शरैस्त्रिभिः ॥ १९
ततो धर्मसुतो राजन्प्रगृह्यान्यन्महद्धनुः ।
द्रौणिं विव्याध सप्तत्या बाह्वोरुरसि चार्दयत् ॥ २०
सात्यकिस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे ।
अर्धचन्द्रेण तीक्ष्णेन धनुश्छित्त्वानदद्भृशम् ॥ २१
छिन्नधन्वा ततो द्रौणिः शक्त्या शक्तिमता वरः ।
सारथिं पातयामास शैनेयस्य रथाद्द्रुतम् ॥ २२ C 8 2573 B 8 53.24 K 8 50.23

---

reads 13ab on marg — a) B1 Dn1 D5 8 T1.2 श्रुतसोमश्च V1 B5 D2–4 6 7 तु (for च) — b) S (except T2) तथाष्टभि॰ (for च सप्तभि॰) — D2 om (hapl.) 13c–15f — d) K3 ते (for त)

14 D2 om. 14 (cf. v l. 13) V1 reads 14ab on marg — a) K1 सोत्यक्रुद्धस्, K3 V1 B D (D2 om ) T2 M स तु क्रु(D8 वि)द्धस्, K4 सोतिविद्धस्, T1 3 G स संक्रुद्धस् (for सोऽति॰) — b) K3 ज्वलन् (for श्वसन्) — d) V1 Dn1 D6 T2 3 G M1–3 प्रत्य(M1–3 ॰ति)विध्यच्, T1 प्रतिविध्य॰, M4 ॰व्यविध्यच् (for प्राविध्यत) K1 B1 3 D7 T2 शिलीमुखैः, B1 शितैः शरैः, Da1 D8 शिलाशवैः (for ॰शितैः)

15 D2 om. 15 (cf v l. 13) — b) K3 Dn1 D3 T1 श्रुतसोम, B1 सूत॰, G2 सुतमोमश्च — c) K3 सप्तभि॰; B1 5 Da1 Dn1 D1.3 5 T1 M अष्टाभि॰, T3 G नवभि॰ (for अष्टभि॰) Ś1 K3 B3 Dn1 T1 श्रु(T1 कृ)तवर्माणं (for ॰कर्माण) — d) D6.8 G1 2 प्रत्यविध्यत् (G1 ॰ध्यं), T2 3 प्रतिविध्य (for ॰विन्ध्य) V1 D5 शितैः (for त्रिभि॰) T1 M1 तथा, T3 G तदा (for शरैः) — K3 om (hapl ) 15e–16d — f) K4 धर्मराज V1 B1 5 D2 4 6 7 च पंचभि॰, Da1 D1 5 त्रिभि॰ शरैः (for च सप्तभि॰)

16 K3 om 16 (cf v l. 15) — a) Da1 D1 3–5 7 तथा (for अथ) D2 [इ]तरस् (for [इ]तरास्) Ś1 K1.4 V1 B5 D6 तथा (for तत॰) V1 B5 Da1 D1 5 योधान्, D2 शूरा (for शूरान्) Dn1 D3 S अथेतरान्म(D3 ॰न्यानपि म)हेष्वासान् — b) V1 Dn1 S समर्पयत्, D3 समर्दिवान् (for अताडयत्) — c) B3 Dn1 D3 श्रुतकीर्तिस् Dn1 D2 8 S ततश्च (for तथा) T3 G चापि (for चाप) — d) Ś1 निशतैः S (except T2) मृष्टौ (T3 G धनुश्च) चिच्छेद मारिष

17 K4 D2 6 om (hapl.) 17 — a) Ś1 आधाय (for आदाय) — b) Da1 D1 5 महायशा (for ॰रथ॰) — c) Ś1 V1 B2 5 D3 T1 3 G1 3 M1–3 द्रोणायनिं T2 द्रौणाय नवभिर्विद्ध्वा — d) Dn1 D8 T2 पुनश्चान्यैः (for विव्याधान्यैः) V1 Da1 Dn1 D1 5 8 T2 त्रिभि॰ शरैः, G1.2 शिलाशितैः (for शितैः शरैः)

18 a) Ś1 K1 द्रौणिं; T3 G2.3 द्रोणिर् — b) D8 शरवर्षेश्च (for ॰र्षेण) K3 B1–4 D2–4 6 7 मारिष, V1 B5 Da1 D1 5 सर्वशः, Dn1 D3 T G3 M सर्वतः (for भारत) — d) K3 समस्ताश्च Ś K2 4 च शरैस्त्रिभि॰, K1 च त्रिभि शरैः, V1 B Da1 D1 3–5 भरतर्षभ, Dn1 D3 S युद्धदुर्मदः, D2 6 च शरैर्नृप (for च शरैर्नृपान्)

19 Ś K1 2 4 om (hapl ) 19 — b) G1 2 धर्मपुत्रस्य — cd) Dn1 T2 प्रहसन् (for विहसन्) D8 द्रौणिर्हसन्प्र चिच्छेद (for ॰) S (except T2) द्विधा छित्त्वा प्रहस्या(G1 ॰सह्या)थ तं विव्याध त्रिभि॰ शरैः

20 a) K2 धर्मसुतो (for धर्मसुतो) D6 राजा — b) K1 Dn1 T2 [अ]न्य (for [अ]न्यन्) D2 प्रगृह्य रुचिरं धनु॰ — c) T1 द्रोणपुत्र चतु पष्ट्या, T2 3 G M द्रोणपुत्रं त्रि(T3 G3 तु)पष्ट्या तु — d) K1 चाक्रयात्, K3 B1–4 D2–4 6 7 S चार्पयत् V1 D3 चैव हि, B5 Da1 Dn1 D1 5 चैव ह (for चार्दयत्)

21 a) S शैनेयस् (for सात्यकिस्) D6 सुसक्रुद्धो (for (for तत॰ क्रुद्धो) — b) D6 बाणै॰ (for द्रौणे॰) B1 द्रौणिना प्रहरतो रणे (hypermetric) — c) T3 G3 बाणेन (for तीक्ष्णेन) — d) G2 [अ]नदन्

22 b) K1 शक्ता॰ (for शक्त्या) — d) K4 सैन्ये यस्य (for शैनेयस्य) S द्रुतं रथात् (by transp )

2675 5 24 अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान् ।
50 24 शैनेयं शरवर्षेण छादयामास भारत ॥ २३
तस्याश्वाः प्रद्रुताः संख्ये पतिते रथसारथौ ।
तत्र तत्रैव धावन्तः समदृश्यन्त भारत ॥ २४
युधिष्ठिरपुरोगास्ते द्रौणिं शस्त्रभृतां वरम् ।
अभ्यवर्षन्त वेगेन विसृजन्तः शिताञ्शरान् ॥ २५
आगच्छमानांस्तान्दृष्ट्वा रौद्ररूपान्परंतपः ।
प्रहसन्प्रतिजग्राह द्रोणपुत्रो महारणे ॥ २६
ततः शरशतज्वालः सेनाकक्षं महारथः ।
द्रौणिर्ददाह समरे कक्षमग्निर्यथा वने ॥ २७
तद्बलं पाण्डुपुत्रस्य द्रोणपुत्रप्रतापितम् ।
चुक्षुभे भरतश्रेष्ठ तिमिनेव नदीमुखम् ॥ २८
दृष्ट्वा ते च महाराज द्रोणपुत्रपराक्रमम् ।
निहतान्मेनिरे सर्वान्पाण्डून्द्रोणसुतेन वै ॥ २९
युधिष्ठिरस्तु त्वरितो द्रौणिं श्लिष्य महारथम् ।

---

23 $^a$) Ś$_2$ K$_1$ आधाय — $^d$) T$_{1\ 3}$ G$_{2,3}$ M वारयामास (for छादया°)

24 $^a$) Ś K$_2$ तथाश्वा (Ś$_2$ °श्व°) (for तस्याश्वा°) K$_3$ D$_3$ प्रहृता°; Da$_1$ D$_{1\ 5}$ विद्रुता; G$_3$ प्रद्रुत (for प्रद्रुता°) K$_1$ D$_3$ G$_2$ M$_{2-4}$ संख्ये — $^b$) K$_3$ V$_1$ Da$_1$ D$_{1.5\ 8}$ पातिते — After 24$^{ab}$, Ś K$_{1\ 2}$ read 12$^{cd}$ — $^c$) T$_{1.3}$ G$_3$ तत्रैव धावतस्तस्य — $^d$) V$_1$ B$_5$ Da$_1$ D$_{1\ 5}$ S (except T$_1$) मारिष (for भारत)

25 $^a$) K$_3$ V$_1$ B Da$_1$ Dn$_1$ D$_{1-5\ 7\ 8}$ T G$_{1\ 3}$ M तु; D$_6$ G$_2$ च (for ते) — $^b$) G$_1$ वर° — $^c$) B$_2$ Dn$_1$ D$_{6\ 8}$ T$_1$ G$_{1\ 2}$ अभ्यवर्तत, Da$_1$ D$_{1\ 5}$ M$_1$ °वर्तत, M$_3$ °वर्षत — $^d$) V$_1$ विसृजंत (for °जन्त°) T$_{1\ 3}$ G$_{1\ 3}$ transp. शितान् and शरान्

26 $^a$) V$_1$ B$_5$ Da$_1$ D$_{1\ 5}$ आगच्छतस्तु (for °मानांस्) S सहसा पत(M$_1$ °ति)तस्तान्वै — $^b$) Ś$_1$ K$_2$ रुद्ररूपान् (K$_2$ °पा ), K$_3$ V$_1$ B Da$_1$ D$_{1-5\ 7}$ S क्रुद्धरूपान् (K$_3$ °प ), Dn$_1$ D$_8$ क्रूर° (for रौद्र°) K$_4$ B$_{1\ 3}$ परतप, S समतत° — $^d$) D$_1$ महारण; D$_5$ °रथ°

27 M$_{3\ 4}$ om (hapl ) 27$^{ab}$ — $^a$) K$_{1\ 2}$ शरशत-(K$_1$ °त)ज्वाला°, K$_3$ शरो महाज्वाल°; K$_4$ सरसत° ज्वाल° (sic). — $^b$) Ś K$_{1\ 2\ 4}$ सेनाकक्ष्य D$_{2\ 6}$ महायल°; S (M$_{3\ 4}$ om ) °रणे (for °रथ°) — $^d$) Ś K$_{1\ 2\ 4}$ कक्ष्यम्, Co कक्षम् (as in text) B$_2$ यथाचले, S इवोद्ध(T$_{1\ 2}$ °स्थि)त° (for यथा वने)

28 $^a$) V$_1$ Da$_1$ Dn$_1$ D$_{1\ 5}$ S पाण्डवेयस्य (for पाण्डुपुत्रस्य) — $^b$) Ś K$_{1\ 2}$ om (hapl ) from प्रतापितम् up to द्रोणपुत्र (in 29$^b$) V$_1$ द्रोणपुत्रेण तापित; B$_{3\ 4}$ °त्र° प्रतापवान्, Dn$_1$ D$_8$ T$_{1\ 2}$ G$_2$ M °त्रशराहत, T$_3$ G$_{1\ 3}$ °त्रशरार्चित (G$_1$ °र) — After 28$^c$, T$_{2\ 3}$ G ins

505* तस्मिन्नेव चमूमुखे ।
तद्बल पाण्डवेयस्य द्रोणपुत्रशरार्चिपा ।
तापयन्भरतश्रेष्ठ गभस्तिभिरिवांशुमान् ।
तत्ताप्यमान तीक्ष्णाग्रैर्ब्राह्मणस्य च सायकै° ।
क्षुभ्यते पाण्डव सैन्यं

[(L. 3) T$_2$ पातयन् (for तापयन्) — After line 3, G$_2$ ins

506* तद्भज्यमान मर्षेण ब्राह्मणस्य शराहतम् ।

The above is followed by repetition of 28$^c$ and lines 2–4 of 505* in G$_2$ — (L 4) T$_3$ G$_{1\ 3}$ पच्य(G$_1$ भज्य)मानममर्षेण; G$_2$ (both times) तद्भज्यमान मर्षेण (for the prior half). G$_2$ (second time) ब्राह्मणस्य शराहत (for the posterior half) ]

— $^d$) T$_{2\ 3}$ G$_3$ तिमिनैव (for °नेव) Ca cites तिमिना T$_1$ M तस्मिन्नेव चमूमुखे (= line 1 of 505*) Ca cites नदीमुखम् (as in text)

29 Ś K$_{1\ 2}$ om. up to द्रोणपुत्र (in 29$^b$) (cf v 1 28) K$_3$ om 29$^a$–30$^b$ — $^a$) T$_2$ ततस् (for दृष्ट्वा) B$_5$ D$_{4\ 7}$ चैव; Dn$_1$ D$_8$ तं च, S तत्र (for ते च) — $^b$) D$_{2-5}$ द्रोणपुत्रप्रतापितान् (D$_2$ °पिन ), T$_2$ °शरार्दितान् — $^{cd}$) Ś$_2$ निहितान् (for निह°) Dn$_1$ सर्वानमन्यत हतान् (for °) S सर्वान्दु(T$_2$ दृष्ट्वा दु)र्योधन पार्थान्ह(G$_1$ °र्थे ह)तान्युद्धे(T$_2$ G$_{1\ 2}$ M$_1$ [ऽ]भ्य)मन्यत

30 K$_3$ om 30$^{ab}$ (cf. v 1 29) — $^a$) D$_3$ त्वरित — $^b$) D$_{2\ 6}$ द्रोणे (for द्रौणिं) B$_3$ M$_1$ द्रोणशिष्यं, B$_5$ M$_{2-4}$ द्रोणशिष्यो (for द्रौणिं श्लिष्य) Ś$_1$ K$_2$ श्लिष्ट्वा, Ś$_2$ K$_{1.4}$ दृष्ट्वा, B$_1$ G$_{1.2}$ पीड्य; B$_3$ शिष्य, D$_2$ श्लिष्यन्, T$_1$ विद्ध्वा, T$_{2\ 3}$ G$_3$ विध्य (for श्लिष्य) K$_1$ महारथ Dn$_1$ D$_8$ द्रौणेर्दृष्ट्वा (D$_8$ दृष्ट्वा द्रौणे) पराक्रम — $^c$) B$_{1\ 4}$ T$_{2\ 3}$ G M द्रोणपुत्रं स, B$_3$ °त्र त; D$_{3.4.7}$ °त्राय; T$_1$ °त्र वै — $^d$) V$_1$ D$_6$ रोषामर्षसमन्वित — After 30, T G ins

507* जानामि त्वां युधि श्रेष्ठ वीर्यवन्त बलान्वितम् ।
कृतास्त्रं कृतिनं चैव तथा लघुपराक्रमम् ।
बलमेतद्भवान्सर्वं पार्षते यदि दर्शयेत् ।
ततस्त्वां बलवन्तं च कृतवीर्यं च विग्रहे ।
स हि वै पार्षत दृष्ट्वा समरे शत्रुसूदनम् ।
भवेत्तव बलं किंचिद्ब्रवीमि त्वां न तु द्विज ।

अब्रवीद्द्रोणपुत्रं तु रोपामर्षसमन्वितः ॥ ३०
नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता ।
यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ॥ ३१
ब्राह्मणेन तपः कार्यं दानमध्ययनं तथा ।
क्षत्रियेण धनुर्नाम्यं स भवान्ब्राह्मणब्रुवः ॥ ३२
मिषतस्ते महाबाहो जेष्यामि युधि कौरवान् ।
कुरुष्व समरे कर्म ब्रह्मबन्धुरसि ध्रुवम् ॥ ३३
एवमुक्तो महाराज द्रोणपुत्रः स्मयन्निव ।
युक्तत्वं तच्च संचिन्त्य नोत्तरं किंचिदब्रवीत् ॥ ३४
अनुक्त्वा च ततः किंचिच्छरवर्षेण पाण्डवम् ।
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः ॥ ३५
संछाद्यमानस्तु तदा द्रोणपुत्रेण मारिष ।
पार्थोऽपयातः शीघ्रं वै विहाय महतीं चमूम् ॥ ३६
अपयाते ततस्तस्मिन्धर्मपुत्रे युधिष्ठिरे ।
द्रोणपुत्रः स्थितो राजन्प्रत्यादेशान्महात्मनः ॥ ३७
ततो युधिष्ठिरो राजा त्यक्त्वा द्रौणिं महाहवे ।
प्रययौ तावकं सैन्यं युक्तः क्रूराय कर्मणे ॥ ३८　C 8 2591 B 8 53 30 K 8 50 44

इति श्रीमहाभारते कर्णपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

[(L 1) T3 G3 महाबल (for बलान्वितम्) — (L. 3) T1 पार्पताय च दर्शयद् (for the post half) — (L. 4) T1.3 G3 तु (for च) T3 G2 3 कृतविद्य (for °वीर्य) — (L. 5) T3 G2 3 न (for स) T3 G3 मे (for वै) — (L 6) G2 त्वा T3 G3 इति (for न तु) T3 G2 3 द्विज ]

31 a) D5 ते मनस (for नाम तव) T2 प्रज्ञा (for प्रीतिर्) — b) T2 G2 न च (for नैव) B2 कृताज्ञया (for कृतज्ञता) — c) V1 B3 5 Dn1 D8 S (except T1) ततस् (for यतस्) — d) Dn1 D8 मामेवाभि-, T1 तमेवाद्य (for मामे°) K3 जिघांसया (for °ससि)

32 b) Dn1 तप (for तथा) S शमश्च दम एव च — d) K3 5 D5 ब्राह्मण ध्रुव (K3 °वं), K4 Dn1 D8 T1 °णो (T1 °णे) ध्रुवं, D2 6 °णो ध्रुव, G1 °णप्रम

33 Dn1 D5 S transp 33ab and 33cd — a) D5 मिषितस् D2 6 च, T2 तु (for ते) Dn1 D8 S (except T2) [ऽ]द्य समरे (for महाबाहो) — After 33a, G1 reads 35de repeating it in its proper place — b) K3 B D3-5 7 T3 युधि जेष्यामि (by transp ), Dn1 योधयिष्यामि, D8 विजेष्याम्यद्य, S (except T3) ध्रुव जेष्यामि (G3 °म) D2 6 जेष्यामि त्वा सकौरव — c) M2-4 तरमम (for समरे) Dn1 कर्णं (for कर्म) — d) Dn1 D8 S ब्रह्मबंधो यथेष्टत (D8 °ष्ठसि, T2 °प्सित) Ca c cite ब्रह्मबन्धुर् (as in text)

34 a) V1 उक्ते — c) K3 V1 B1 2 4 5 Da1 Dn1 D2-8 T2 3 G M युक्त तत्त्व (Dn1 D8 °थ्य) च, B3 युक्तमयुक्तं च (hypermetric), T1 युक्तं तद्वच (for युक्तत्व तच्च) D1 युक्त तत्त्व स्वसचिंत्य

35 a) K4 अनुक्तो (sic) V1 T1 तु, Dn1 D8 [ए]व (for च) — b) M2-4 पाडवान् — G1 reads 35de for the first time after 33a — c) G1 (first time) सछाद्यमान (for छादयामास)

36 a) K3.5 V1 B1 D (except Dn1 D2 8) T2 3 G1 3 M1 स छाद्य°; B3 त छाद्य°, T1 प्रच्छाद्य° D8 तु तथा; S (except T1) समरे (for तु तदा) — Da1 om. (hapl.) 36c–37b — c) S व्य(T3 व्या)पायासीद्द्र(T3 G3 °याद्र)णे पार्थ — d) K3 विगाह्य, Dn1 D1 5 8 (marg as in text) S प्रगृह्य (for विहाय)

37 Da1 om 37ab (cf. v l. 36) — a) S प्रयाते तु (for अपयाते) D8 च तस्मिन्वै (for ततस्तस्मिन्) — b) V1 D2 6 धर्मराजे (for °पुत्रे) — c) V1 B3.4 Da1 Dn1 D2-4 7 8 T1 2 ततो, Ca स्थितो (as in text) — d) V1 B3 4 Dn1 D3-4 7 8 प्रत्यगात्स, Ca प्रत्यादेशान् (as in text) Co cites प्रत्यगात् K4 V1 B3 4 Dn1 D3 4 6-8 महामना (B4 Dn1 °न) (for °त्मन)

38 a) Dn1 T2 M युधिष्ठिर V1 B Da1 Dn1 D1 3-5 7 8 राजन्, T2 M त्यक्त्वा (for राजा) — b) B2 Dn1 G1 द्रौणिर् T2 M राजानं द्रौणिराहवे — c) Dn1 प्रययौ G2 तावका — d) K1 युक्ता, T2 क्रुद्ध, G1 युक्त, M1 युधि; Ca युक्तः (as in text) G2 कर्मणि D2 6 मुक्त्वा स क्रूर(D6 क्रूर)योधिन

Colophon. — *Day of Karṇa's Generalship* Ś1 K1 4 द्वितीये (Ś2 य) युद्धदिवसे — *Adhy name* B2 द्रौणिना युधिष्ठिरपलायन, D1 पार्थापयानः T2 अश्वत्थाम पराक्रम; M1 अश्वत्थामयुद्ध — *Adhy no* (figures, words or both) Ś1 39 (as in text), K1 D1 50, B1 D7 55, B2 46, B4 58, B5 D6 56, Da1 D5 66, D4 36, T1 3 G 53, T2 M 52

## ४०

संजय उवाच ।

भीमसेनं सपाञ्चाल्यं चेदिकेकयसंवृतम् ।
वैकर्तनः स्वयं रुद्ध्वा वारयामास सायकैः ॥ १
ततस्तु चेदिकारूपान्सृञ्जयांश्च महारथान् ।
कर्णो जघान संक्रुद्धो भीमसेनस्य पश्यतः ॥ २
भीमसेनस्ततः कर्णं विहाय रथसत्तमम् ।
प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ॥ ३
सूतपुत्रोऽपि समरे पाञ्चालान्केकयांस्तथा ।
सृञ्जयांश्च महेष्वासान्निजघान सहस्रशः ॥ ४
संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः ।
पाञ्चालेषु तथा कर्णः क्षयं चक्रुर्महारथाः ॥ ५
ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोपमैः ।
जग्मुर्विनाशं समरे राजन्दुर्मन्त्रिते तव ॥ ६
ततो दुर्योधनः क्रुद्धो नकुलं नवभिः शरैः ।
विव्याध भरतश्रेष्ठ चतुरश्चास्य वाजिनः ॥ ७
ततः पुनरमेयात्मा तव पुत्रो जनाधिपः ।
क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ॥ ८
नकुलस्तु ततः क्रुद्धस्तव पुत्रं त्रिसप्तभिः ।
जघान समरे राजन्सहदेवश्च पञ्चभिः ॥ ९
तावुभौ भरतश्रेष्ठौ श्रेष्ठौ सर्वधनुष्मताम् ।
विव्याधोरसि संक्रुद्धः पञ्चभिः पञ्चभिः शरैः ॥ १०
ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत ।

---

40

1 $^{a}$) Ś K3 4 B1 4 Da1 D1 4 6 7 च पांचाल्य (Ś1 K3.4 D4 °ल्य; Da1 D1 6 °ल), V1 B2 5 D5 8 S (except T1) सपाचालं (M1 °ल) — $^{b}$) K3 4 Dn1 D6 8 चेदिकेक (°के)यसवृत, Da1 D1 6 °केकयसवृत, G1 °केकरसंवृतं (sic) — $^{c}$) B3 D1 स्वयं क्रुद्धो, Dn1 तु संक्रुद्धो; D8 सुसक्रुद्धो (for स्वय रुद्ध्वा) T1 3 G M सेनापति (M1 °ति) स्वय क्रुद्धो; T2 सूत सेनापति क्रुद्धो — D2 om (hapl) $1^{c}$–$2^{c}$ — $^{d}$) V1 Da1 D4 छादयामास (for वार°) Ś K3 4 सैनिकै (for सायकै)

2 D2 om $2^{abc}$ (cf. v l 1) — $^{a}$) B3 D6 T2 G1 ततश्च Ś K3 देवकारूपान्, S चेदिकारूशान् — $^{d}$) B1.3.4 D3 4 7 समरे (for सक्रुद्धो)

3 B3 om $3^{ab}$ — $^{a}$) T1 3 G तु सं (for तत°) — $^{b}$) K1 D1 G1 रथमुत्तमं; K4 D8 °सत्तम — $^{c}$) K1 कौरवे. — $^{d}$) Ś K3 4 कक्षयम्; D6 कक्षेषु Da1 D1 5 अग्नेर् Dn1 दहन्निव (for इव ज्वलन्). B3 om from मग्नि up to कौरवे (in $5^{b}$)

4 B3 om 4 (cf v 1 3) — $^{b}$) Ś1 D7 पचालान् K4 Dn1 D1 4 5 8 कैकयास् T2 तदा (for तथा) — $^{d}$) S स(G3 M8 स)जघान (for निज°)

5 B3 om up to कौरवे (in $5^{b}$) (cf v 1 3) — $^{a}$) Some MSS संसप्तकेषु K3 4 B4 पार्थस्य, V1 Da1 Dn1 D1 5 वै पार्थ (D1 °र्थ), S पार्थस्तु. — $^{b}$) B4 ततस्तत. (for वृकोदर) — Ś K1 2 om. $5^{cd}$. — $^{c}$) V1 B5 Da1 D1.5.7 पचालेषु. B1 तत (for तथा) — $^{d}$) G2 चक्रे D2 महारथं T3 G1 3 क्षयकाले यथाभय

6 $^{a}$) B2 च (for ते) D5 पावकोत्तमै. — $^{c}$) S विनाशमगमन्वीर्यं — $^{d}$) K1 मंमंत्रिते V1 राजन्दुर्मन्त्रितेन वै.

7 $^{a}$) M4 om from ततो up to क्षुरेण (in $8^{c}$). B3 राजा (for क्रुद्धो) — $^{b}$) K3 V1 B1 3 4 Da1 D1.2–5.8 नवभिर्नकुल (by transp), B2 नवभिर्निशितै. Da1 D1 5 शनै (for शरै) — After $7^{ab}$, D5 reads $9^{cd}$, repeating it in its proper place and om $7^{c}$–$8^{b}$ — $^{c}$) B3 G1 M1 भरतश्रेष्ठ — $^{d}$) S (M4 om) चतुर्भिस्त(T1 2 °श्चा)स्य

8 M4 om up to क्षुरेण (in $8^{c}$), D5 om $8^{ab}$ (cf v 1 7) — $^{a}$) S (M4 om) परन् (for पुनर्) — $^{b}$) K3 V1 B1 4 5 D (D8 om) T G3 M (M4 om.) जनाधिप, B2 नराधिप; B3 जनेश्वर — $^{d}$) K4 T2 कार्मुकं (for काञ्चनम्)

9 $^{a}$) Ś K1 2 3 च (for तु) M1 क्रुद्धं — K3 om. (hapl) $9^{b}$–$10^{a}$. — $^{b}$) B6 D3 G1 2 च (G1 2 तु) सप्तभि; D1 त्रिसप्तति; D2 त्रिभि शरै, T2 त्रिभिस्त्रिभिः — D5 reads $9^{cd}$ for the first time after $7^{ab}$ — $^{c}$) Ś आजघान भृशं राजन् — $^{d}$) B1 सहदेव D4 तु (for च) B2 3 D8 सप्तभि (for पञ्चभि)

10 K3 om $10^{ab}$ (cf v 1 9) B2 om (hapl) 10–11 — $^{a}$) V1 Da1 D1 T2 भरतश्रेष्ठ (V1 °ष्ठ) — $^{b}$) B1 5 D2–4 7 ज्येष्ठौ; Dn1 om., M श्रेष्ठ — $^{d}$) D1 om. one पञ्चभि

11 B2 om 11 (cf. v 1. 10) — $^{a}$) G1 फलाभ्यां

यमयोः प्रहसन्राजन्विव्याधैव च सप्तभिः ॥ ११
तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे ।
प्रगृह्य रेजतुः शूरौ देवपुत्रसमौ युधि ॥ १२
ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं नृप ।
शरैर्ववर्षतुर्घोरैर्महामेघौ यथाचलम् ॥ १३
ततः क्रुद्धो महाराज तव पुत्रो महारथः ।
पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः ॥ १४
धनुर्मण्डलमेवास्य दृश्यते युधि भारत ।
सायकाश्चैव दृश्यन्ते निश्चरन्तः समन्ततः ॥ १५
तस्य सायकसंछन्नौ चकाशेतां च पाण्डवौ ।
मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्यौ हतप्रभौ ॥ १६
ते तु बाणा महाराज हेमपुङ्खाः शिलाशिताः ।
आच्छादयन्दिशः सर्वाः सूर्यस्येवांशवस्तदा ॥ १७
बाणभूते ततस्तस्मिन्संछन्ने च नभस्तले ।
यमाभ्यां ददृशे रूपं कालान्तकयमोपमम् ॥ १८
पराक्रमं तु तं दृष्ट्वा तव सूनोर्महारथाः । C 8 2708 B 8 56 17 K 8 51 17

(for भ्राताभ्यां) — b) K4 D1 समकृंतत, Dn1 समलङ्कृते (for °कृन्तत) G2 धृष्टद्युम्नस्य चाच्छिनत् — G2 om 11c–32d — c) K3 B (B2 om.) D2–4.7 सहसा, Dn1 समरे (for प्रहसन्) S (G2 om.) यमयो प्रसभं वी(T1 वी)रो — d) K3 D8 T2 [अ]थ, V1 B (B2 om.) Da1 Dn1 D1–5.7 च; D6 स, T1 3 G1 3 M [अ]तु (for [ए]व) K3 Dn1 D8 S (G2 om.) त्रिभिस्त्रिभिः, V1 B (B2 om ) Da1 D1–5 7 त्रिभसत्तभिः (for च स°)

12 G2 om 12 (cf. v l 11) — a) Da1 D1.5 श्रेष्ठ, S (except T2, G2 om ) मृष्टे (for श्रेष्ठे) — b) M2 4 शत- (for शक्र ) Dn1 क्षणे; S (G2 om ) तदा (T1 °था) (for शुभे) — c) Dn1 वीरौ (for शूरौ) — d) T2 देवप्रतिसमौ Dn1 देवपुत्रौ महारथौ

13 G2 om 13 (cf v l 11) — a) T1 रभसाद्, M1 रभसो — b) K3 क्षयं, B1 D3.4.7 T3 युधि, Dn1 D8 G3 M नृप — c) Ś1 K3 V1 B D (except Dn1 D8) G1 ववृषतुर् — d) Ś K1.2 4 B1 महा(K1 सह)मेघै-रिवाचलं, D8 श्वसमानौ महाबलौ, S (G2 om ) तोयदाविव पर्वतं

14 G2 om. 14 (cf. v l 11) — d) G1 सप्तभिः (for पत्रिभिः)

15 G2 om. 15 (cf. v l. 11) — b) D6 S (G2 om.) ददृशे — c) Da1 D1.2 5 सायकाश्, Dn1 तावकाश् V1 B5 Da1 Dn1 D1.2 5 M2–4 च व्यदृश्यंत (D2 °ते), B1 चापि दृश्यंते, T G1 3 M1 चाप्य(T2 °स्य)दृश्यंत (T2 °ते) (for चैव दृश्यन्ते) D6 सायका न व्यदृश्यते — d) B3 D8 T1 G1 निःसरंत, Dn1 निश्चरंत, D2 निःश्वसंत (for निश्चरन्त) T2 G1 M ततस्तत (for समन्तत)

16 G2 om. 16 (cf v l 11) B3 om 16ab. B5, Bom. and Cal. ed. om 16a–17b. — a) Ś2 K2 4 सायकसछिन्नौ (Ś2 °च्छा) — b) K3 V1 B1 2 4 D2 3.6–8 चकासेते, Da1 D1 4 5 चकासाते, Dn1 प्रकाशेते V1 B1 2 3 Da1 Dn1 D1 5 न (for च) S (G2 om.) माद्रेयौ न विरेजतु — c) V1 मेघच्छन्ने — d) Ś K1.2 4 प्रभावृतौ; B1 D7 कृतप्रभौ; B3 तथाभ्रगौ, T1 G1 M हृतप्रभौ, T1.3 G3 गतप्रभौ (for हतप्रभौ) B2.4 Da1 चंद्रसूर्यकृतप्रभौ

17 G2 om 17 (cf v l. 11) B5 om 17ab (cf v l 16) — b) Dn1 S (G2 om ) स्वर्णपुङ्खा (for हेम°) — c) K3 T1 दश दिश (for दिश सर्वा°) — d) K3 B2 4 Dn1 D7 [अ]शवो यथा, B5 D2–4 [अं]शवस्तथा; Da1 D1 5 गभस्तय°, S (G2 om ) मरीचय

18 G2 om. 18 (cf v l 11) — a) K1 भीतभूते (for बाण°) Ś2 K1.4 तदा (for ततस्) — b) M2 4 संछिन्ने च B4 यथानले; T1 3 G3 नभस्थले T2 सछन्ने नभस स्थले, G1 छन्ने च नभस स्थले — After 18ab, Dn1 ins

508* नकुल सहदेवश्च क्रोध तीव्रं समास्थितौ ।
तां बाणवृष्टिं राजस्तु घोरैः शतसहस्रभिः (sic) ।
छादयामासतुरुभौ बाणौघैस्तनयं तव ।
ततस्तयोर्महाराज सृजतोरनिशं शरान् ।

— c) B2 5 Da1 Dn1 D1 5–7 यमयोर्; S (G2 om ) राजस्तु (for यमाभ्या) K3 D3 दृश्यते (for ददृशे)

19 G2 om. 19 (cf. v l. 11) — a) Ś1 तद् (for त) Dn1 विक्रमं तु तयोर्दृष्ट्वा — b) B4 तस्य (for तव) Dn1 पुत्रोर् (for सूनोर्) K1 4 D3 महारथौ; Dn1 M1 °रथः. — After 19ab, Dn1 ins

509* क्रोधमास्थाय परम निःश्वसश्च यथोरग ।
बाणान्धकार ससृजे तव पुत्रस्तयोस्तदा ।

— c) K4 मृत्युर् Dn1 D6 8 (marg ) T3 G1 3 दुर्वांतिक,

एवमुक्त्वा ययावेष पृष्ठतो विकिरञ्शरैः ॥ ३७
पश्य कर्णं रणे पार्थ श्वेतच्छत्रविराजितम् ।
उदयं पर्वतं यद्वच्छोभयन्वै दिवाकरः ॥ ३८
पूर्णचन्द्रनिकाशेन मूर्ध्नि छत्रेण भारत ।
ध्रियमाणेन समरे तथा शतशलाकिना ॥ ३९
एष त्वा प्रेक्षते कर्णः सकटाक्षो विशां पते ।
उत्तमं यत्नमास्थाय ध्रुवमेष्यति संयुगे ॥ ४०
पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः ।
शरांश्चाशीविषाकारान्विसृजन्तं महाबलम् ॥ ४१
असौ निवृत्तो राधेयो दृश्यते वानरध्वज ।
वधाय चात्मनोऽभ्येति दीपस्य शलभो यथा ॥ ४२
कर्णमेकाकिनं दृष्ट्वा रथानीकेन भारत ।
रिरक्षिषुः सुसंयत्तो धार्तराष्ट्रोऽभिवर्तते ॥ ४३
सर्वैः सहैभिर्दुष्टात्मा वध्य एष प्रयत्नतः । E 8 3022 C 8 60 46 K 8 62. 26

---

D1 3 T1 3 G2.3 ययौ ह्येष, B1 3-5 D2-4 7 गतो ह्येष, D6 ययौ वीर, T2 M [अ]नुयात्येष (for ययावेष) — d) V1 B (except B2) D (except D3) S (G1 om ) शरान् — After 37, Dn1 ins

566* राधेय कौरवीं सेनां रक्षमाण समन्तत ।

38 G1 om. 38 (cf. v l 37) — a) K1 Dn1 कर्णं D3 रथे (for रणे) — b) K3 V1 B Dn1 D2 3 6 T1 3 G2 3 श्वेतच्छत्रविराजित, Da1 D1 °त्रं विरा°, D4 4 7 °त्रैर्विरा°, D3 °त्रे विराजते, T2 M °त्रेण राजता (T2 °ते) — Dn1 om. 38cd — c) K4 पर्वते T2 M उदय पर्वत सम्यग् — d) K4 शोभयन् V1 B1-3 5 Da1 D1.3-5 7 शशाकेनोप- (B2 D3 4 7 °नाभि)शोभितं, B4 शशाकेनोपलक्षितं, D2 6 शोभयंत दिवाकर, T1 3 G2 3 शशांकेन विराजितं, T2 M यथा (M3.4 °दा) चंद्रेण शोभते (T2 राजते)

39 G1 om. 39ab (cf v 1. 37) — a) D6 पूर्णचंद्रनिभाकाशे — b) D3 श्वेत- (for मूर्ध्नि) K4 भारत, T2 (sup lin as in text) राजते — c) K1.4 ध्रि(K4 श्रि)यमाणेन V1 B2-4 शुशुभे (for समरे) — d) V1 B D (except D3) श्रीमच् (for तथा) K3 शतकलाकिना (sic), Ca °शला° (as in text)

40 a) Ś1 K1 त्व, M त्वा Da1 D1 6 प्रेक्ष्यते, D2 T1 वीक्ष(D2 °क्ष्य)ते K4 कर्ण Cv as in text — b) K3 V1 B Da1 Dn1 D1 2 4-3 S Cc v सकटाक्ष, K4 D3 शकटाक्षो (D3 °क्ष) T2 3 G2 3 धनजय (for विशां पते) — c) K3 B (except B1) Dn1 D3 4 7 8 जवम्, T2 रयम् (for यत्नम्) — d) D6 सयुग

41 a) Dn1 चैन; D3 [अ]थैन, M ह्येष (for ह्येन) — b) T G विधून्वान D2 महाधनु M धनुर्ज्यामनु(M1 °व)मार्ष्टि च — d) K3 महाबल, B1 4 6 D1 3-5 7 °रणे, T1 °धर M पाणिना परिमार्ष्टि च

42 a) B1 समाप्ते (for राधेयो) — b) K4 दृश्यते (sic) (for दृश्यते) K1 4 वानरध्वज K3 V1 B D S दृष्ट्वा ते वानर(Da1 °र)ध्वज — After 42ab, K4 V1 B (except B1) D (except D2 3) S ins

567* प्रार्थयन्समरं पार्थ त्वया सह परंतप ।

[B1 D3 G1 M1 समरे, D6 सत्वर M1 पार्थ B3 पर- (for सह) ]
— c) Ś K1 2 विधाय (for वधाय) Da1 D1 6 [S]प्येति, T1 M2 4 ह्येति (for ऽभ्येति) — d) Ś1 (marg as in text) K2 चापस्य, K3 चाकाश, K4 B1.3 D3 4.7 दीपास्य, V1 B2 हुताशं, B4 दीप्तास्य, B5 Da1 D1 5 चाशास्यं, Dn1 S पावकं, D2 6 प्रदीप, D3 चापास्य (for दीपस्य) K1 Dn1 शलभे — After 42, K4 B5 Da1 Dn1 D1 5 S ins

568* एष ह्यमर्षी शूरश्च धार्तराष्ट्रहिते रत ।
त्वा न मर्षयते पार्थ नित्यमेव सुमन्दधी ।
[(L. 1) B5 व्यमर्षी — (L. 2) B5 न त्वां (by transp ) K4 B5 च मदधी, T1.3 G1 स न° ]
K4 S cont

569* एकाकिन च दृष्ट्वैनं धार्तराष्ट्रो रणाजिरे ।
[K4 दृष्ट्वैव K4 धार्तराष्ट्रान्, G2 M1 °राष्ट्रा ]
S cont Dn1 ins after 568*

570* त्वा च पार्थाभिसंरब्ध कर्णं प्रति महारथम् ।
[Dn1 त्व (for त्वा) ]
— After the above, Dn1 S read 45

43 a) D3 एकाकिन Dn1 हत्वा — For 43ab, S subst Dn1 ins after 575*

571* असौ दुर्योधन क्रुद्धो रथानीकेन दशित ।
[Dn1 अय (for असौ) ]
— K4 om 43c-44b — c) D2 निरक्षिषु ; M3 रिरक्षितु (for °क्षिषु ) K3 B1 2 D3 4 7 8 सुसवृत्तो, Da1 D1 °यत्ता, T1 °युक्तो; T2 3 G1 3 M सूतपुत्र — d) Ś2 D3 विवर्तते, K3 B D1-4 6 7 निव°, V1 विवर्धते, Dn1 निवत्तत (sic), T G3 M [S]भ्यवर्तत; G1 2 ह्यवर्तत

44 K4 om 44ab (cf v 1. 43) — a) K3 सहैव, T2 स्वभावैर्, (for सहैभिर्) K3 धर्मात्मा — b) B1 4 5 D3 4 7 वध्यता च (for वध्य एष) Ca cites वध्य (as in text) — T2 repeats 44cd after 572* — c) D3 (marg as in text) स्वर्गो (for त्वया) — d) K3 इच्छसि, K4 इच्छते, M1 इच्छत — Ś K V1 (repeating after

023 47 26 त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता ॥ ४४
आत्मानं च कृतात्मानं समीक्ष्य भरतर्षभ ।
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ॥ ४५
प्रतिपद्यस्व राधेयं प्राप्तकालमनन्तरम् ।
आर्यां युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ॥ ४६
पञ्च ह्येतानि मुख्यानां रथानां रथसत्तम ।
शतान्यायान्ति वेगेन बलिनां भीमतेजसाम् ॥ ४७
पञ्च नागसहस्राणि द्विगुणा वाजिनस्तथा ।

---

49^ab) B2 3 (both repeating after 49^ab) Da1 D1-3 (D3 repeating after 49) ins after 44 B4 5 after 48 Dn1 after 49 T G after 49^ab (followed by the repetition of 44^cd in T2)

572* अदीनयोर्विश्रुतयोर्युवयोर्योत्स्यमानयो ।
देवासुरे पार्थ मृधे देवदानवयोरिव ।

[(L. 1) V1 B2-5 (all second time) Dn1 D3 (second time) T G नृसिंहयोर् (for अदीनयोर्) V1 B2-5 (all second time) नरव्याघ्र, T3 G3 विश्रुतयोर्, Ca विश्रु° (as above) D3 (second time) भवतोर् Ś1 K1 2 4 B5 (first time) T1 G1.3 युध्यमानयो ; Ś2 युद्ध°, Da1 योत्स° — (L 2) D3 देवासुर- V1 B2-5 (all second time) वीर्ये देवा(V1 °व)सुरे पार्थ (B3 4 युद्धे); Dn1 D3 (second time) देवासुरे पुरा (Dn1 °सुरपुरे) पार्थ (for the prior half) ]

V1 B2-5 Dn1 D3 T G cont

573* पश्यन्तु कौरवा सर्वे तव पार्थ पराक्रमम् ।
[B3 transp सर्वे and पार्थ B2 4 5 तत्र (for सर्वे) ]
The above is followed by 49^cd in V1

B2-5 G2 cont after 573* · Ś K B1 Da1 D1-7 after 572* V1 after 49^cd D3 ins after 577*

574* त्वां च दृष्ट्वाभिसंरब्धं कर्णं च भरतर्षभ ।
असौ दुर्योधन क्रुद्धो नोत्तरं प्रतिपद्यते ।

[(L. 1) K4 त्व (for त्वां) K3 [अ]भिसंरब्ध, D2 च सं°, D3 ससं° G2 त्वां च पार्थाभिसरब्ध कर्णं प्रति महारथ — Ś1 K1.2 G2 om line 2 K3 repeats line 2 after 45 — (L. 2) Ś1 K3 प्रत्यपद्यत (Ś2 °ते), D5 प्रतिपद्यत, Co °पद्यते (as above) ]

45 Ś K1.2 om 45^ab Dn1 S read 45 after 570* — ^a) T1 3 G तु कृतार्थं च, M अकृतार्थं (M1 °र्थे) च (for च कृतात्मान) Ca.o cite कृता° (as in text) — ^b) B4 पुरुषर्षभ — D5 om (hapl.) 45^d-46^a. — After 45, K3 repeats line 2 of 574* and Dn1 ins.·

575* सहित स तु दुष्टात्मा धार्तराष्ट्रोऽभ्यवर्तते ।
एष एव निहन्तव्यो मूलं वैरस्य भारत ।
मूले छिन्ने यथा नाश शाखानां जायते ध्रुवम् ।
तथा दुर्योधने पार्थ हते स्युरखिला हता ।
धार्तराष्ट्रा महाबाहो सभृत्यामात्यबान्धवा । [5]
पश्य सर्वे यथा योधा यान्ति भीमरथं प्रति ।
भीमोऽपि घो[रो]पताम्राक्षो हन्ति शत्रूनशेषत ।
एष धर्मसुतो राजा यमाभ्यां परिपालित ।
दुर्योधनोऽपि कर्णेन रक्ष्यते ससुतेन च ।
कृतवर्मा कृपो द्रौणी रक्षन्तोऽन्योन्यमुत्तमा । [10]
कुलूक शकुनिश्चैव कृत्वा रक्षां स्थितावुभौ।

46 D5 om. 46^a (of v l. 45) Dn1 reads 46^a twice. — ^a) K3 प्रतियुध्यस्व (for °पद्यस्व) B D3.4 7 कौन्तेय, Da1 D1 5 M राधेये, Dn1 (first time) राधेय and (second time) राधेयो — ^b) B3 T2 3 G1.3 अरिंदम (T3 °मं) (for अनन्तरम्) G2 प्राप्य वैक्लव्यमाहवे — ^c) D5 G1 आर्यो, Co आर्यां (for आर्यां) — ^d) M3 प्रत्येह; Ca प्रत्येहि (as in text) D3 कुरुनंदन (for रथयूथपम्)

47 ^a) Ś K2 4 B1 5 D2 6 7 T2 M1 मुख्यानि; K1 मुखानि — ^b) T1 यूथानां (for रथानां). K4 रथसत्तम ; B1 G2 °त्तमा; D1 °मुत्तम, D3 T1 रथिस° (for रथस°). — V1 om. 47^cd. — ^c) B (except B3) D2-4.7 समरे (for वेगेन) K1 शतान्यायंतरेगेन (sic). ❀Ca.o पञ्च-शतानीत्यन्वय (Co °नीत्यर्थ)।❀ — ^d) B (except B3) D S तिग्मतेजसां (for भीम°)

48 ^a) S हस्ति° (for नाग°) — ^b) T1 G2 M1 त्रिगुणान्, T2 3 G1 3 M2-4 त्रिगुणा — ^c) T2 अभिसंगत्य; Ca. o °हत्य (as in text) T1 3 G सहिता°; T2 M वेगेन (for कौन्तेय) — ^d) K1 पदात्तिप्रयतानि (sic); S पादाता· प्रयु°. V1 B3 5 Da1 D1.5 6 पद्र; Dn1 वा (for च) — ^e) Ś2 D4.6 T2 G2 M3 अन्योन्यं रक्षितं (G2 °तां); K1-3 °न्यरक्षिता (K3 °सु) T1 वीरे — ^f) K3 V1 B2 Da1 D1.2 5 6 अनुवर्तते (for अभि°) — After 48, B1.5 read 572*, 573* and 574*, while S ins after 48

576* द्रोणपुत्रं पुरस्कृत्य तव शीघ्रं च सूदय ।
निकृत्यैतद्यानीकं बलिनं लोकविश्रुतम् ।

[(L. 1) T1 च सूदयन् T2 तच्छीघ्रं संनिषूदय, M तच्छीघ्रं

अभिसंहृत्य कौन्तेय पदातिप्रयुतानि च ।
अन्योन्यरक्षितं वीर बलं त्वामभिवर्तते ॥ ४८
सूतपुत्रे महेष्वासे दर्शयात्मानमात्मना ।
उत्तमं यत्नमास्थाय प्रत्येहि भरतर्षभ ॥ ४९
असौ कर्णः सुसंरब्धः पाञ्चालानभिधावति ।
केतुमस्य हि पश्यामि धृष्टद्युम्नरथं प्रति ।
समुच्छेत्स्यति पाञ्चालानिति मन्ये परंतप ॥ ५०
आचक्षे ते प्रियं पार्थ तदेवं भरतर्षभ ।
राजा जीवति कौरव्यो धर्मपुत्रो युधिष्ठिरः ॥ ५१
असौ भीमो महाबाहुः संनिवृत्तश्चमूमुखे ।
वृतः सृञ्जयसैन्येन सात्यकेन च भारत ॥ ५२
वध्यन्त एते समरे कौरवा निशितैः शरैः ।
भीमसेनेन कौन्तेय पाञ्चालैश्च महात्मभिः ॥ ५३
सेना हि धार्तराष्ट्रस्य विमुखा चाभवद्रणात् ।
विप्रधावति वेगेन भीमस्य निहता शरैः ॥ ५४
विपन्नसस्येव मही रुधिरेण समुक्षिता ।
भारती भरतश्रेष्ठ सेना कृपणदर्शना ॥ ५५
निवृत्तं पश्य कौन्तेय भीमसेनं युधां पतिम् ।
आशीविषमिव क्रुद्धं तस्माद्द्रवति वाहिनी ॥ ५६
पीतरक्तासितसितास्ताराचन्द्रार्कमण्डिताः । C 8 3038 B 8 60. 63 K 8 62 43

---

त नि(M3 वि)सृज्य (for the posterior half) — T1 om line 2 — (L. 2) M बलिनां ]

49 B1.5 om $49^{ab}$ — $^{a}$) B1 3 D2.4 6 7 सूतपुत्रं; D3 G3 °पुत्र, T2 M द्रोणपुत्रे (for सूत°) Ś K1 2 4 महेष्वास, B1 D2–4 7 °ष्वास — After $49^{ab}$, V1 B2 3 repeat 572*, T G ins 572* V1 reads $49^{cd}$ after 573* — $^{c}$) B1.4.5 D2 3 7 T1 जवम् (for यत्नम्) — After 49, Dn1 ins 572*, 573* and cont.

577* मृतानि चैव सर्वाणि कुरुपाञ्चालसृञ्जया ।

while after 49, D3 repeats 572*, followed by 573*, 577* (with the variant पंचाल-) and 574*

50 K3 om. (hapl.) $50^{a}$–$51^{b}$ — $^{a}$) Ś1 कर्णे, D1 क्रुद्ध (for कर्ण) K1 स्वसरब्ध, T2 सु सं°, G1.2 सुसक्रुद्ध — $^{b}$) Some MSS पंचालान् — $^{c}$) G1.2 च (for हि) T2 संपश्य (for पश्यामि) — $^{e}$) B2 समुच्छेप्यसि, B3 °स्येस्यति; Da1 Dn1 D1.5 8 °च्छेप्य(Da1 °स्य-, D3 °स्य)ति, D2–4 7 °पैप्यति, T1 स तु छेत्स्यति (for समुच्छे°). Ś1 B4 पचा ल्लान् — $^{f}$) Ś1 K4 [अ]मन्ये B1 4 इति मे धीयते मतिः

51 K3 om. $51^{ab}$ (cf. v 1. 50) — $^{a}$) Ś K3 4 D2 M1 आचक्षे तु प्रियं; V1 °क्षते प्रि°, B1 °क्ष च प्रिया, B2–5 Da1 Dn1 D3.4 7 T1 G1 2 आचचक्षे प्रिय; D1.5 °क्षे च प्रिय; D6 °क्षितुं प्रि°; D8 °क्षेहं प्रि°, T2 3 G3 °क्षे त्वप्रि° (for °क्षे ते प्रि°) Cc cites आचक्षे (as in text) M3 क्षय (for प्रियं) — $^{b}$) Ś K1 2 4 G1 2 तदेव, B1.4 5 D3 4.7 8 M2 4 तवेदं; T1 तवैव; M3 त वेद (for तदेव) D3 भरतोत्तम (for °तर्षभ) — $^{c}$) Da1 D1 3–5 राजासौ कुशली श्रीमान्; Dn1 D3 T1.3 G राजेप कुशली धी(Dn1 °लो धी-; T1 °ली श्री)मान् — $^{d}$) B1 T2 M धर्मराजो (B1 °ज) (for °पुत्रो)

52 $^{a}$) Da1 D1.5 महेष्वास (for महाबाहु) — $^{c}$) D6 वृत्त Ś1 K4 D1 T1 संजय सैन्येन — $^{d}$) Da1 D1.3-5 7 शैनेयेन, D2 6 सात्वतेन; M सत्यकेन (for सात्य°). B3 महात्मना (for च भारत)

53 $^{a}$) K3 V1 B2.3 Da1 D1.5 8 एते वध्यति, B5 वध्यति एते; D6 °त एव, T2 अस्यत एते; M हन्यत एते Ca cites वध्यति T1 3 G एते युधि विहिंस्यते — $^{b}$) Dn1 D6 T1 G2 कौरवान्; T1 G2 M कुरवो — T2 M2–4 om. (hapl.) $53^{c}$–$54^{d}$ — $^{c}$) D2 6 कौरव्य (for कौन्तेय) Da1 Dn1 D1.5 8 T1 3 G M1 क्रुद्धेन भीमसेनेन — $^{d}$) Ś1 K1 Da1 D6 पंचालैश्च T1 3 G M1 महारथैः

54 T2 M2–4 om. 54 (cf. v 1. 53) — $^{b}$) K2 damaged B (except B1) Da1 D2 5 6 विमुखी (for °खा). K3 D7 विद्रुता, B3 विक्लवा, B4 D2 6 T1 3 G M1 व्य(T1 व्या)द्रवद्, B5 व्यस्त°; Da1 D1.3–5 वित्र°, Dn1 D8 प्राद्र° (for चाभ°) V1 B1 2 D3 विद्रवद्रणा (D3 °णात्) (for चाभवद्रणात्) B1 रणा; B3 Dn1 D8 G2 रणे (for रणात्) — $^{cd}$) Ś1 K1 4 M1 प्रति(M1 °त्य)धावति, Dn1 विप्रधा वति K4 निशिता, V1 विहता, B2 5 Da1 Dn1 D1–5 7 [अ]भिहता, D6 प्रहिता (for निहता) T1 3 G वेगेन भीमसेनस्य विहिता विविधैः शरैः

55 $^{a}$) M2 4 विपन्नसस्येन, Ca °सस्येव (as in text) — $^{b}$) K4 समुछिता (sic), B1 °स्थिता; G2 °रिक्षता Da1 D1.5 भीमस्याभिहता शरैः (cf. $54^{d}$) — $^{c}$) Da1 D1.5 कौरवी (for भारती) T1 M3 भारतश्रेष्ठ — $^{d}$) G1 कृपणदर्शिना, Co कृपणदर्पणा (sic)

56 $^{a}$) M1 निवित्त (for निवृत्त) V1 T2 3 G3 M कौंतेय, T1 वेगेन — $^{d}$) T1 2 भारत, T3 G भारती (for वाहिनी) B (except B2) Dn1 D3 4.7 8 M द्रावयतं (B1 °यती, M1 °याना; M2–4 °यान) वरूथिनीं

57 $^{a}$) Ś1 पीतरक्त B1 3 4 पीतरक्ता शि(B1 सि)ता कृष्णास्, Dn1 °क्तासितशिता; D6 °शिता श्वेतास्; G1.2

पताका विप्रकीर्यन्ते छत्राण्येतानि चार्जुन ॥ ५७
सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः ।
केतवो विनिपात्यन्ते हस्त्यश्वं विप्रकीर्यते ॥ ५८
रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः ।
नानावर्णैर्हता बाणैः पाञ्चालैरपलायिभिः ॥ ५९
निर्मनुष्यान्गजानश्वान्रथांश्चैव धनंजय ।
समाद्रवन्ति पाञ्चाला धार्तराष्ट्रांस्तरस्विनः ॥ ६०
मृद्नन्ति च नरव्याघ्रा भीमसेनव्यपाश्रयात् ।
बलं परेषां दुर्धर्षं त्यक्त्वा प्राणानरिंदम ॥ ६१
एते नदन्ति पाञ्चाला धमन्त्यपि च वारिजान् ।
अभिद्रवन्ति च रणे निघ्नन्तः सायकैः परान् ॥ ६२
पश्य स्वर्गस्य माहात्म्यं पाञ्चाला हि परंतप ।

---

वीर(G2 पीन)रक्तासितसिताः — b) Ś K1 3 4 ताराश्च, T2 G ताराश्च (for वारा) Ś1 K4 चन्द्रार्कमण्डित (K4 °ता), K1 चन्द्रार्कमंडिता (sic), Da1 D1 5 °र्कमंजिता; D8 °संनिभा — c) Ś1 पातका K1 Da1 D1 5 विप्रकीर्यंति (K1 °र्यंती, D1 °र्यंति); B1 °र्यंत — d) Dn1 चैव तु (for चार्जुन)

58 a) Ś1 B3 5 T1 सौवर्णराजताश्च, K4 G1 2 °र्णरजताश्च T2 G1 3 चैते (for चैव) — b) Ś1 K1 M1 तेजसाश्च; D8 तैजसा च, T2 G ध्वजसंघा, M2–4 शरैश्चैव (for तैजसाश्च) Cc cites तैजसा(·) K4 [अ]पृथग्विधा; M पृथग्विधैः — c) K2 V1 B1.2 4 5 D3 4 6 7 [ऽ]भिनिपा(B1 °प)त्यते, B3 [ऽ]तिनि°, Da1 D1 5 [ऽ]भिनिपद्यते, D2 [ऽ]भिनिपतंत्येते (hypermetric), T1 G1 2 हि निपात्यत, T2 विनिपद्यते (for °पात्यन्ते) — d) K2 4 B2 3 Da1 D1 3–7 च प्रकीर्यते; B3 च विद्री°, T1 G1 प्रतिकी°; M1–3 प्रवि° Dn1 हस्त्यश्वाश्च प्रकीर्तिता

59 a) K3 रणेभ्य° S प्रपतत्यन्ये — b) Dn1 वै गतासव, T1 G1 2 M3 4 [ऽ]पि ग° — c) Ś1 नानावर्णा, Ś1 °वर्णं, K2 4 °वर्णं-, V1 B3 Dn1 D8 S °रूपैर् (for °वर्णैर्) T2 3 G3 महा- (for हता) — d) Ś1 D8 4 पचालैर् Da1 D1 5 अपलायितैः

60 ab) K2 निर्मानुष्यान्, K3 मनुष्यांश्च G1 2 M1 2 4 transp गजान् and रथांश्च T1 M3 रथान् (for गजान्) M2–4 चापि (for चैव) — c) T1 समाक्रमते, T2 G1 °प्लुवते, T2 G2 3 M °प्लवते Ś1 K3 B2 D7 पचाला. — d) V1 B1 D7 धार्तराष्ट्रास्

61 a) K3 B1 2 4 5 Dn1 D3 4 7 8 विमृद्नंति, B3 निगृह्णंति, Da1 D1 5 विमूहति, D2 मृदंति च Da1 Dn1 D1 5 G1 2 M1 नरव्याघ्र; D2 6 महाराज, T2 नरश्रेष्ठ. — b) K3 B1.4 5 D (except D2 6) भीमसेन(B1 °न)बलाश्रयात्, V1 °समाश्रयात्, B3 °बलाश्रया, T1.3 G °स्य संश्रयात् — c) S यदेषां (for परेषां). K1 B2 D (except D6 8) दुर्धर्षास् — d) K1 अरिंदम; Da1 D1.5 °दमा.; D8 अपि द्विपा,

62 a) Ś1 K3 नदति; B Dn1 D3.4.7 T2 M2–4 नर्दंति, M1 नदति Ś1 पचाला; K3 पांचालान् — b) B Da1 Dn1 D1 3–5 7 T1 3 G M ध्मापयति च; D8 धमंतश्चापि, T2 ध्मादीयंति च (sic) (for धमन्त्यपि च). D2 धार्तराष्ट्रांस्तरस्विन — c) D2 6 T2 G2 परे (for रणे) — d) K2 निघ्नत, B1 3–5 D3–5 मृद्नत B2 निघ्नाना; Da1 D1 7 मृद्नत (for निघ्नन्त) K1 परं D2 6 निघ्नतां (D6 °घ्नानां) निशितैः शरैः

63 a) B Da1 Dn1 D1–5.7 8 पश्यस्वै(B2 D7 8 °श्य स्वे)षां च (D8 हि) (for पश्य स्वर्गस्य) Cc cites स्वर्गस्य (as in text) D6 धार्तराष्ट्रीं चमूं वीरा. — b) Ś1 D1 पचाला V1 [अ]पि, M च (for हि) K2 T2 3 G M परंतपा; B1 3–5 Da1 D1.3–5 7 पराक्रमाद् B2 T1 पांचालाना परंतप; Dn1 पांचालानां पराक्रमान्. — c) S विनिघ्नतो (G2 °ते) — d) T1 G1 2 M विशंसंते रथान्वि(M1 रथा वि°; M2 परान्वि)भो, T2 3 G3 विदारयेते रथोत्तमान्. — After 63, N ins

578* शस्त्रमाच्छिद्य शत्रूणा सायुधानां निरायुधा ।
तेनैवैतानमोघास्त्रा निघ्नन्ति च नदन्ति च ।
शिरांस्येतानि पात्यन्ते शत्रूणा बाहवोऽपि च ।
रथनागहया वीरा यशस्या सर्व एव च ।

[(L. 1) Ś K1 2 4 शस्त्रमुत्सृज्य, Dn1 D8 शस्त्राण्याच्छिद्य- Cc cites आच्छिद्य Ś1 K2 आयुधाना, Ś1 K1.4 आ(Ś1 सा)युधानि Da1 D1 5 निरायुधा (D1 °ध) — (L. 2) S K1 2 4 D2 6 शस्त्रै(K4 °रै)र्विना हि, B1 Da1 D1 5 तेनैव तान्, B3 पते चैतान्, D3 तैरेवैतान् (for तेनै°) Ś1 B1 Da1 Dn1 D1 5 8 अमोघास्तान्, Ś1 K2 4 D2 6 ह्यमोघास्तान् (Ś1 D2 6 °स्त्रा) V1 तैरेव नाम शस्त्रौघैर् (for the prior half). D2.6 निघ्नंति च परस्परं (for the posterior half) — D3 repeats line 3, after 579*. — (L. 3) Ś K1.2.4 Dn1 D8 शिरांस्येषा निपात्यंते; D2.6 योधा (D6 योधैर्) योधा निपात्यते (for the prior half) Ś K D8 वा(D8 द)हवो युधि; Dn1 D8 (second time) आहवे(Dn1 °वो)पि वा, D3 बहुशो युधि (for बाहवोऽपि च) — (L. 4) Ś1 K2 3 V1 Da1 D1.2 3 र(V1 त)था नागा Ś1 K1.4 रथनागा हया वीरा; B2 °नागान्ह-

धार्तराष्ट्रान्विनिघ्नन्ति क्रुद्धाः सिंहा इव द्विपान् ॥ ६३
सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः ।
पाञ्चालैर्मानसादेत्य हंसैर्गङ्गेव वेगितैः ॥ ६४
सुभृशं च पराक्रान्ताः पाञ्चालानां निवारणे ।
कृपकर्णादयो वीरा ऋषभाणामिवर्षभाः ॥ ६५

सुनिमग्नांश्च भीमास्त्रैर्धार्तराष्ट्रान्महारथान् ।
धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून्सहस्रशः ।
विषण्णभूयिष्ठरथा धार्तराष्ट्री महाचमूः ॥ ६६
पश्य भीमेन नाराचैश्छिन्ना नागाः पतन्त्यमी ।
वज्रिवज्राहतानीव शिखराणि महीभृताम् ॥ ६७ C 9 3053 B 8 60 78 K 8 62 56

यान्वीरा, Dn1 हयाश्वागागश्चाश्चैव (for the prior half) V1 प्रशस्ता, B2 प्रशस्ता, B3 सशल्या, B4 Da1 D1 5 प्रशस्या (for यशस्या) K3 V1 B3 4 Da1 D1 5 हि, B1 ते, B2 ह (for च) Dn1 व्यश्वसूतान्निपातितान्, D2 6 पत्तयो रथिनस्तदा (D5 °था), D8 सूताश्च विनिपातिता (for the posterior half) ]

64 a) K4 [अ]पिपन्नैषा, D2 विपन्नेषा (for [अ]भिपन्नैषा) Cc cites अभिपन्न (as in text) — b) T2 G2 धार्तराष्ट्र- D2 महाचमू — After 64ab, Dn1 D8 ins (D8 repeating the same after 66)

579* पाञ्चालैर्मागधैश्चैव योधा नीता यमक्षयम् ।

— After the above, D8 repeats line 3 of 578* On the other hand, S (except T2) ins after 64ab

580* त्यक्त्वा प्राणान्महेष्वासैः पाञ्चालैः परिपाल्यते ।
[M2-4 °ताप्यते ]

— Dn1 D8 T2 G M om. 64cd T2 om. (hapl.) 64c–66f — c) D2.4 6 7 पचालैर् Da1 D1.5 अत्र (for एत्य) — d) B5 सिंहैर् (for हंसैर्) Da1 D1 5 गागेव, D2 गगन- S2 वेगतै, V1 वेगिभि

65 T2 om. 65 (cf v l 64) Dn1 D8 read 65ab after 66cd — a) K4 स भृशं K3 पराक्रांत, Dn1 °क्रांतं — b) Some MSS पंचालानां S2 विवारणे — c) D2 कृतवर्मादयो Da1 D1 5 वीरान् — d) D1 इवर्षभ — For 65, S (except T2) subst.

581* सुहृदश्च पराक्रान्ता कृपकर्णादयो विभो ।
निवारणे महेष्वासा पाञ्चालाना परंतप ।
[(L. 1) M1 सभृश च (for सुहृदश्च) T1 विभो ]

66 T2 om 66 (cf. v l. 64) — a) S2 सुनिमग्नाश्च, K4 Dn1 D8 संनिमग्ना(D8 °ग्नां)श्च, V1 B1 3.4 Da1 D1 3-5 7 सुनिर्भग्ना(B1 3 °भंग्ना-, D8 °भग्ना)श्च, D2 6 सुम(D6 स म)ग्नाश्चापि, T1 3 G M1 अनिवृत्तांश्च; M1-4 अभिमग्नाश्च (for सुनिमग्नांश्च) B1.3 5 M1 भीमास्ते (M1 °स्त्रा), T1 भीतास्ता; T3 भीता तां; G1 2 भीताश्च; G3 भीतांस्तान्, Bom. ed. भीमास्त्रेण सुनिर्भग्नान् — b) K4 Dn1 M4 धार्तराष्ट्रा, M2 3 °राष्ट्रै Dn1 महारथा, T1.3 M1 परंतप, M2-4 परतपा (for महारथान्) — c) Dn1 -रथान् (for -मुखा) K1 वीर, Dn1 D2 वीरान् — d) M1 घ्नत K1 शत्रु — After 66cd, Dn1 D8 read 65ab. — Ś K1 2 4 V1 B Da1 D1-7 ins after 66cd Dn1 D8 after 65ab

582* पाञ्चालेष्वभिभूतेषु द्विषद्भिरपमीर्नदन् ।
शत्रुपक्षमवस्कन्ध्य शरानस्यति मारुति ।

[(L 1) S2 D1 3-5 7 पचालेषु Ś1 K1 2 4 अपि निर्णु(K1 °र्ण)दन्; V1 B1.3 अपि निर्न(B1 °र्न)दन्, Da1 D1.2-5 7 अपमीर्नु°, D6 असिमिर्नु. — (L. 2) Ś K1 2 4 V1 B2 D2 शत्रुमध्यन् Co cites अवस्कन्ध्य (as above) Ś K1 2 4 द्विपान्, D6 स तान् (for शरान्) D2 आस्यति, D6 पश्यति ] On the other hand, T1 3 G M1.3 4 ins after 66cd M2 after 66

583* रथाश्च विमुखा सर्वे निवृत्ते भरतर्षभे ।
[G2 M1 रथाश्च T1 भरतर्षभ ]

— B3 om. 66c–67b — c) K3 4 V1 B (B3 om ) D विपण्ण(Dn1 D8 विवर्ण-, D2 निपण्ण)भूयिष्ठतरा, S (T2 om.) विवर्णमुखभूयिष्ठा (M1 °ष्ठो) — f) K4 महाचमू, D2 3 °चमु (D8 °मू) — After 66, D8 repeats 579* K3.4 V1 B (except B3) Da1 Dn1 D1-7 ins after 66 D8 after the repetition of 579*

584* रथाश्चैते सुवित्रस्ता भीमसेनभयार्दिता ।

[V1 B4 Da1 रथाश्चेमा (B4 °ता), B1 °श्चैता (sic), B2 °श्चेता (sic), D1 5 °श्चेमो (sic) (for °श्चैते) K4 तथा चैवेषु वित्रस्ता (sic), B5 रथेमाश्चेषु वित्रस्ता; D2 रथनागास्तुवि°, D6 रथा नागास्तु वि° (for the prior half) Da1 D1 5 8 -बलार्दिता ]

67 B3 om 67ab (cf v l 66) — ab) K3 भीमस्य K1 नाराचच्छिन्ननागा K3 V1 B (B3 om.) Da1 D1-8 T1.3 G M2-4 भिन्ना (for छिन्ना) G2 सेना (for नागा ) — For 67ab, Dn1 subst

585* नाना नागा हता बाणैर्भीमेन प्रपतन्त्यमी ।

— c) B3 वज्रीवज्रा, Da1 Dn1 D1 3 T1 3 G M2 3 वज्रिवज्र, D2 वज्रैवज्रा; M4 वज्रिवज्रि — d) V1 शिखराणा K3 V1 B D T1.3 G M2-4 धराभृतां (for मही°) — For 67, T2 M1 subst

586* भीमसेनेन मातङ्गा प्रापिता यमसादनम् ।
गिरीणां शिखराणीव निपतन्ति नरर्षभ ।

78 67 भीमसेनस्य निर्विद्धा बाणैः संनतपर्वभिः ।
त्वान्यनीकानि मृद्नन्तो द्रवन्त्येते महागजाः ॥ ६८
नाभिजानासि भीमस्य सिंहनादं दुरुत्सहम् ।
नदतोऽर्जुन संग्रामे वीरस्य जितकाशिनः ॥ ६९
एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम् ।
जिघांसुस्तोमरैः क्रुद्धो दण्डपाणिरिवान्तकः ॥ ७०
सतोमरावस्य भुजौ छिन्नौ भीमेन गर्जतः ।
तीक्ष्णैरग्निशिखाप्रख्यैर्नाराचैर्दशभिर्हतः ॥ ७१
हत्वैनं पुनरायाति नागानन्यान्प्रहारिणः ।
पश्य नीलाम्बुदनिभान्महामात्रैरधिष्ठितान् ।
शक्तितोमरसंकाशैर्विनिघ्नन्तं वृकोदरम् ॥ ७२
सप्त सप्त च नागांस्तान्वैजयन्तीश्च सध्वजाः ।
निहत्य निशितैर्बाणैश्छिन्ना: पार्थाग्रजेन ते ।
दशभिर्दशभिश्चैको नाराचैर्निहतो गजः ॥ ७३
न चासौ धार्तराष्ट्राणां श्रूयते निनदस्तथा ।
पुरंदरसमे क्रुद्धे निवृत्ते भरतर्षभे ॥ ७४

---

68 a) T2 3 G3 M भीमसेनेन K3 निर्भिन्ना — c) K1 (also as in text) द्रवतो; B2 युज्यतो; T3 G3 मृद्नंते. — d) Ś2 द्रव्यत्यैते (sic), K1 द्रवते ते; B6 प्राद्रवत, Da1 D1 5 भ्रमत्येते (for द्रवन्त्येते) T2 M गजोत्तमा — After 68, S ins

587* एते द्रवन्ति कुरवो भीमसेनभयार्दिता ।
त्यक्त्वा रथान्गजांश्चैव हयांश्चैव सहस्रश ।
हस्त्यश्वरथपत्तीनां द्रवतां निस्वन शृणु ।
भीमसेनस्य निनद द्रावयाणस्य कौरवान् ।

[(L 2) T1 गजान्हयाश्च, G1 2 हयान्गजाश्च, M गजाश्वथाश्च (by transp ) T1 रथांश्चापि, G1 2 रथांश्चैव (for हयांश्चैव) T2 समतत (for सहस्रश.) — (L. 4) G1 2 शृणु भीमस्य निनद (for the prior half). G3 द्रवमाणस्य, M3 द्रावयान्यस्य ]

69 a) Ś2 K1 3 4 V1 B3 G1 M1 नाभिजानासि (K4 M1 °ति), B1.4 Da1 Dn1 D1 3–5 7 8 T1 अभि(D8 उत)जानीहि; B3 गजानामिव; D2 6 T2 अभिजानामि (D6 °सि), M2–4 न हि जानासि — b) K3 V1 B Da1 D1–7 सुदु सह, Dn1 D8 मुहुर्मुहु ; S पुन पुन (for दुरुत्सहम्) — c) B5 नर्दतो S नदत पाडवेयस्य — d) Ś K1. 2 4 नर्दतं; Da1 Dn1 D1 5 8 भैरवं, S संग्रामे (for वीरस्य) Ś1 K1 2 जितकाशिनं.

70 a) D8 अप्येति (for अभ्येति) Ś K2 4 एष नैवाभि(K4 °भ्य)तोभ्येति; K1 एष नेवासितेभ्येति (sic) — b) Dn1 पांडव — c) S विसृजस्तोमरान्क्रुद्धो (M1. 2. 4 °त्रुग्रो, M3 °त्रुग्रान्) — d) T2 M [उ]ग्रदन् (for [अ]न्तक ) D8 ध्वजपाणिरिवांतकं

71 a) Ś1 K2 सतोमरार्धस्य भुजौ; S तस्य चैव भुजौ छिन्नौ. — b) K4 भिन्नौ (for छिन्नौ) S भीमसेनेन (for छिन्नौ भीमेन) K2 Dn1 M1 गर्जित ; D6 8 गर्जता. — G1 om. 71cd — c) V1 -विषप्रख्यै; B1–4 D2–4 7 -रवि°; D6 -चय° (for -शिखा°) K3 D8 नागश्चाग्निविष(D8 °शिखा)प्रख्यैर्; B5 Da1 Dn1 D1. 5 नागश्चाग्निरवि(B5 °रिव)प्र°, S (G1 om ) नागश्चार्ककरप्र° — d) Ś2 हता.

72 a) K3 D6 T G2 3 M3 4 हतैते (G2 °ति), B5 Da1 D1 5 नागाश्च, Dn1 हताश्च, M1 3 हंत(M3 °ते)ते (for हत्वैनं); K1. 3 B5 Da1 Dn1 D1 4 5 8 T G2 3 M आयाति G1 नागाश्चान्ये पुनर्यांति — b) K3 Dn1 D8 S नागा ह्यन्ये, B5 Da1 D1 5 हया ह्यन्ये (for नागानन्यान्) B5 Da1 Dn1 D1 5 S प्रमाथिन ; D8 पताकिन — c) K3 -निभा (for -निभान्) B5 Da1 Dn1 D1. 5 8 S नीलांजनचयप्रख्या (B5 °ख्यान्; Dn1 °ख्यैर्). — d) K3 B5 Da1 Dn1 D1 5 8 अधिष्ठिता (Dn1 °तै ), D6 अवस्थितान् (for अधिष्ठि°) S महामात्रवरास्थिता . — e) K3 V1 B Da1 D1–7 T1 G1 2 M3–4 °संघातैर्; Dn1 D8 T3 G3 M1 °संपातैर्, T2 °नाराचैर् (for °संकाशैर्) — f) K3 Dn1 D8 T G2 3 M विनिघ्नतो (M2 °ते); B5 °घ्नंति, G1 निर्विघ्नंत (for विनि°)

73 a) D8 (marg ) सप्तभिर् (for °प्त च) Ś2 K4 नागास्तान्, B5 नागांस्ता; Dn1 नागा स, D8 नागाश्चा (marg °गास्ता), T G3 M नागस्था (M4 °स्था) G1 2 सप्त सप्त गजा बाणै — G1 2 om (hapl.) 73bc. — b) K1 वैजयंतींश्च; Dn1 D8 T1 3 G3 M °यंत्य(M4 °त)श्च — c) B5 Da1 Dn1 D1 5 S (G1 2 om ) नवत्या (for निहत्य). — d) D8 भिन्ना K1 पार्थगजेन (for पार्थाग्र°) V1 च (for ते) — e) G2 चैके, M3 चैकैर् — f) K1 G1 2 निहता (K1 °तो) गजा

74 a) K1 न चास्व (sic), Dn1 D8 महाद्भि (for न चासौ) — b) K3 विनदस् (for निन°) — c) K1 पुरंदरे समे, K2 °रसम , K4 B2 Dn1 D8 °रसम K3 -क्रुद्धो, B5 Dn1 D6 8 T1 युद्धे; T2 क्रोधे (for क्रुद्धे) — d) Dn1 D8 निवृत्तो. K1 4 V1 B2–5 Da1 D1–4 6–8 T1 भरतर्षभ; K3 Dn1 °र्षभ , T2 M वै वृकोदरे (M2. 4 °र), G1. 2 पांडुनंदने (for भरतर्षभे)

अक्षौहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य संहताः ।
क्रुद्धेन नरसिंहेन भीमसेनेन वारिताः ॥ ७५

संजय उवाच ।

भीमसेनेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ।
अर्जुनो व्यधमच्छिष्टानहितान्निशितैः शरैः ॥ ७६
ते वध्यमानाः समरे संशप्तकगणाः प्रभो ।
शक्रस्यातिथितां गत्वा विशोका ह्यभवन्मुदा ॥ ७७
पार्थश्च पुरुषव्याघ्रः शरैः संनतपर्वभिः ।
जघान धार्तराष्ट्रस्य चतुर्विधबलां चमूम् ॥ ७८

C. 8 3068
B 8 60. 32
K 8 62 75

इति श्रीमहाभारते कर्णपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

75 ᵃ) D1 S (except T1) अक्षोहिण्य(G2 °ण्या)स्त K4 ततस्तिस्रो; T2.3 G3 M तु तिस्रो वै (for तथा तिस्रो) — ᵇ) Da1 D1.5 धार्तराष्ट्रेण B5 T1.3 G संगता, Dn1 D3 वै रणे (Dn1 °णा), T2 M समराद्, Ca सहता (as in text) — V1 om. 75ᶜᵈ. — ᵈ) B (except B5) Da1 D1.2–5.7 transp नरसिंहेन and भीमसेनेन Dn1 धारिता, D3 दारिता, T G पातिता. — After 75, S ins

588* न शक्नुवन्ति वै पार्थं पार्थिवा समुदीक्षितुम् ।
मध्यंदिनगतं सूर्यं यथा दुर्बलचक्षुषः ।
एते भीमस्य संत्रस्ताः सिंहस्येवेतरे मृगाः ।
शरैः संत्रासिताः संख्ये न लभन्ते सुखं क्वचित् ।

[(L. 1) M1 नाशक्नुवन्ति M पार्थं T1.3 G न हि शक्ता रणे वेत्तु (T1 भीम) (for the prior half) T1 युधि वीक्षितु (for समुदी°). — (L. 2) T1.3 G दुर्बलदृष्टयः. — (L. 4) T1.3 G2.3 सताडिता (for °त्रासिता). T1 सर्वे, G2 M संख्ये T3 G1.3 लभन्ते न (by transp) ]

T1.3 G cont :

589* राजानं च महाबाहुं पीडयन्त्यात्तमन्यव ।
राधेयो बहुभिः सार्धमसौ गच्छति वेगित ।
वर्जयित्वा तु भीरुं तं पार्श्वतो ह्यानयद्द्रुतं ।
तं पालयन्महाराजं धार्तराष्ट्रो बलान्वित ।

[(L. 1) T1 क्रीडयंन्दर्पनन्दता (for the posterior half) — (L. 3) T3 G2.3 वर्धयित्वा T1 G1.2 भीम (for भीरु) G1 पार्श्वदो (sic) T3 G3 ह्यानय, G2 ह्यनद्द्रु — (L. 4) T1 महाबाहु, G1 °राज्ञो (for °राज) T1 G2 धार्तराष्ट्र T1 बलान्वित ]

76 After the ref., S ins

590* एतच्छ्रुत्वा महाबाहुर्वासुदेवाद्धनंजय ।

— ᵃᵇ) T2 भीमसेनस्य T2 M transp कर्म and दृष्ट्वा K1 कृत्वा (for कृतं) K3 सुदुष्प्रहं — ᶜ) Ś2 मर्जुने. D2.6 सेनां (for शिष्टान्) — ᵈ) D2.6 स्वदीयां; T1 G1 इह तान् (for महितान्) T3.3 G3 M संशप्तकगणान्बहून्

77 ᵃ) T2 M हन्यमाना (for वध्य°) S पार्थेन (for समरे) — ᵇ) Some MSS संसप्तक° — After 77ᵃᵇ, K4 V1 B Da1 D1.3–5.7 ins

591* प्रभग्ना समरे भीता दिशो दश महाबला ।

— ᵈ) K3 V1 B D तदा (for मुदा) — For 77ᶜᵈ, T1.3 G subst

592* शक्रस्यातिथिता प्राप्ता समपद्यन्त विज्वरा ।

While T2 M subst. for 77ᶜᵈ

593* विशोका समपद्यन्त शक्रस्यान्तिकतां गता ।

S cont

594* नारायणांस्तु गोपालान्व्यधमत्पाण्डुनन्दन ।
उत्तमं वेगमास्थाय चण्डवायुर्घनानिव ।
अन्वकीर्यन्त भीतास्ते तत्र तत्रैव भारत ।
लुलितांश्च तत शूरानहनत्पुरुषोत्तम ।

[(L. 2) T1.2 M जवन् (for वेगम्) T2 M महावातो, G1 पार्थो वायुर् (for चण्डवा°) — (L. 3) M1 अवकीर्यन T1 G1.2 ते भीता (G1 ते विनीता) ह्यन्वकीर्यत (for the prior half) T1 तत्रैव तत्र (for तत्र तत्रैव) — (L. 4) M लुलिताश्च तत शूरा वध्यमाना महाहवे ]

78 ᵃ) Dn1 D3 S (except T2) पुनश्च (for पार्थश्च) V1 Dn1 D1–5.8 T1 पुरुषव्याघ्र — ᵈ) K3 °फलां चमू (sic), D2 °महाचमु, G1 °बलाश्चमू Ca cites चतुर्विध° (as in text)

Colophon. — *Day of Karṇa's Generalship* Ś2 K4 द्वितीययुद्धदिवसे — *Adhy name* K1 मर्जुनसंवादे; Dn1 श्रीकृष्णवाक्यं; T1 महायुद्धे युधिष्ठिरकुशलसंवादं; T1 भीमसेनपराक्रमवर्णनं, M1 युद्धदर्शन — *Adhy no* (figures, words or both) Ś2 44, K1 45, B1 60, B2.4 56, B5 62, Da1 71, D1 55, D3 61, T1.3 G M1 67, T2 M2–4 66

# ४४

धृतराष्ट्र उवाच ।

निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे ।
वध्यमाने बले चापि मामके पाण्डुसृञ्जयैः ॥ १
द्रवमाणे बलौघे च निराक्रन्दे मुहुर्मुहुः ।
किमकुर्वन्त कुरवस्तन्ममाचक्ष्व संजय ॥ २

संजय उवाच ।

दृष्ट्वा भीमं महाबाहुं सूतपुत्रः प्रतापवान् ।
क्रोधरक्तेक्षणो राजन्भीमसेनमुपाद्रवत् ॥ ३
तावकं च बलं दृष्ट्वा भीमसेनात्पराङ्मुखम् ।
यत्नेन महता राजन्पर्यवस्थापयद्बली ॥ ४
व्यवस्थाप्य महाबाहुस्तव पुत्रस्य वाहिनीम् ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान्युद्धदुर्मदान् ॥ ५
प्रत्युद्ययुस्तु राधेयं पाण्डवानां महारथाः ।
धुन्वानाः कार्मुकाण्याजौ विक्षिपन्तश्च सायकान् ॥ ६
भीमसेनः शिनेर्नप्ता शिखण्डी जनमेजयः ।
धृष्टद्युम्नश्च बलवान्सर्वे चापि प्रभद्रकाः ॥ ७
पाञ्चालाश्च नरव्याघ्राः समन्तात्तव वाहिनीम् ।
अभ्यद्रवन्त संक्रुद्धाः समरे जितकाशिनः ॥ ८
तथैव तावका राजन्पाण्डवानामनीकिनीम् ।
अभ्यद्रवन्त त्वरिता जिघांसन्तो महारथाः ॥ ९
रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।

---

## 44

1 $^{a}$) $D_{a1}$ $D_5$ विवृते (for निवृत्ते) $B_{3.4}$ $D_{a1}$ $D_6$ तु (for च) $K_4$ भीमसेनेन (for °सेने च) — $^{b}$) $B_3$ पाढवेये (for °वे च) — $^{c}$) $K_1$ वाध्यमाने (for वध्य°) $D_{3.6}$ चैव (for चापि) — $^{d}$) $D_1$ मामकै , $D_3$ सायकैः (for मामके)

2 $^{a}$) $K_3$ द्रव्यमाने — $^{b}$) $B_{1.2}$ $D_{3.4.7}$ $G_1$ निरानंदे, $C_{a.c}$ °क्रन्दे (as in text) — After $2^{ab}$, $T_{1.3}$ G ins

595* अवशेष न पश्यामि मम सैन्येषु सजय ।
अहो यत दशा प्राप्तो न हि शक्ष्यामि जीवितुम् ।
जयकाङ्क्षी कथ सूत पुत्राणामनिवर्तिनाम् ।
कथ जीवामि निहताञ्श्रुत्वा च मम सैनिकान् ।
बहुनात्र किमुक्तेन दैव तेषा परायणम् । [5]

— $^{c}$) Ś $K_{1.2.4}$ अकुर्वंश्च; $K_3$ $V_1$ B $D_{n1}$ $D_{1-4.6-8}$ $T_1$ अकुर्वंत $T_2$ M किमत्र कुरवोकुर्वंस्; $T_3$ G मामका किमकुर्वंत — $^{d}$) $K_1$ [आ]चक्ष $K_{1.4}$ सजय

3 After the ref , $T_{1.3}$ G ins

596* क्षयस्त्वेषा महाभाग्तो राजन्दुर्मन्त्रिते तव ।

— $^{a}$) $T_{1.3}$ G महेष्वास (for महाबाहुं) — $^{b}$) S तव पुत्र $K_1$ सूतपुत्रा प्रभातवान् (sic) — $^{c}$) $K_2$ क्रोधरक्तेक्षणो (sic) S क्रुद्धो (for राजन्) — $^{d}$) S अभिद्रवत् (for उपा°) — After 3, $T_{1.3}$ G ins

597* तिष्ठ तिष्ठ पृथापुत्र पश्य मेऽद्य पराक्रमम् ।
अद्य त्वा प्रेषयिष्यामि यमस्य सदन प्रति ।
इत्युक्त्वा प्रययौ तूर्णं यत्र भीमो व्यवस्थित ।

[(L 1) $T_1$ पश्य मे पौरुष तथा (for the posterior half) ]

4 $^{a}$) $D_1$ तु (for च) — $^{b}$) $K_3$ भीमसेन· — $^{c}$) $T_{1.3}$ G कर्णो (for राजन्) — $^{d}$) $D_3$ $T_2$ M बलं (for बली) $T_{1.3}$ G व्यवस्थापयते बल

5 $^{b}$) $D_{1.2.5}$ वाहिनी — $^{c}$) $V_1$ $B_5$ $D_{a1}$ $D_{1.5}$ अभ्युद्ययौ (for प्रत्यु°) $D_5$ तत', S रणे (for तदा) — $^{d}$) $T_{1.3}$ $G_3$ पार्थिवान् (for पाण्डवान्) S (except $G_1$) युद्धदुर्मद

6 $^{a}$) $B_5$ धृष्टद्युम्नस्, $K_4$ प्रत्युद्ययौस् (sic) (for °युस्) $D_{a1}$ $D_{n1}$ $D_{1.5.6.8}$ S च (for तु) — $^{b}$) $T_2$ पांडवा युद्धदुर्मदा — $^{c}$) $D_{n1}$ कार्मुकानाजौ, $D_3$ कार्मुकं राजन् T G धून्वाना विविधाश्चापान्, M नाना चापानि धून्वाना — $^{d}$) $Ś_2$ विपक्षतश् (sic) (for विक्षिपन्तश्).

7 $^{a}$) $Ś_2$ शिनेर्नांप्ता, $K_1$ °नप्ता, $K_4$ °र्नूंप्ता — $^{d}$) $K_1$ सर्व (for सर्वे) $D_5$ वा (for च)

8 $^{a}$) $B_{2.5}$ $D_{3.4.7}$ जिघासतो, $B_4$ $D_{a1}$ $D_{1.5}$ पचालाश्च; S (except $G_1$) पाचालाना $T_{1.2}$ नरव्याघ्र ($T_2$ °घ्र ) — $^{c}$) $K_2$ अभ्यद्रवतु, $K_3$ °द्रवंति S अभ्यद्रवन्सुसक्रुद्धा · — $D_2$ om (hapl.) $8^{d}$–$9^{c}$

9 $D_2$ om $9^{abc}$ (of v 1 8) — $^{a}$) $D_3$ तावकान्· — $^{b}$) S महाचमू (M °मू ) (for अनीकिनीम्) — $^{c}$) $K_2$ $T_2$ M अभ्यद्रवस्ते ($K_2$ °वतु ), $G_{1.2}$ °द्रवतस्, $T_3$ $G_3$ अभिद्रवतस् $D_6$ सक्रुद्धा, $T_2$ (*sup lin* as in text) तरसा (for त्वरिता) — $^{d}$) $K_4$ जिघासतौं, $D_5$ मंजिघसंतो (sic) $D_{n1}$ $T_1$ $G_{1.2}$ महारथान्

10 $^{a}$) $Ś_2$ रथध्वजाश्च कलिलं, $K_1$ ***जाश्च क°, $K_4$

बभूव पुरुषव्याघ्र सैन्यमद्भुतदर्शनम् ॥ १०
शिखण्डी च ययौ कर्णं धृष्टद्युम्नः सुतं तव ।
दुःशासनं महाराज महत्या सेनया वृतम् ॥ ११
नकुलो वृषसेनं च चित्रसेनं युधिष्ठिरः ।
उलूकं समरे राजन्सहदेवः समभ्ययात् ॥ १२
सात्यकिः शकुनिं चापि भीमसेनश्च कौरवान् ।
अर्जुनं च रणे यत्तं द्रोणपुत्रो महारथः ॥ १३
युधामन्युं महेष्वासं गौतमोऽभ्यपतद्रणे ।
कृतवर्मा च बलवानुत्तमौजसमाद्रवत् ॥ १४
भीमसेनः कुरून्सर्वान्पुत्रांश्च तव मारिष ।
सहानीकान्महाबाहुरेक एवाभ्यवारयत् ॥ १५
शिखण्डी च ततः कर्णं विचरन्तमभीतवत् ।
भीष्महन्ता महाराज वारयामास पत्रिभिः ॥ १६
प्रतिरब्धस्ततः कर्णो रोषात्प्रस्फुरिताधरः ।
शिखण्डिनं त्रिभिर्बाणैर्भ्रुवोर्मध्ये व्यताडयत् ॥ १७
धारयंस्तु स तान्बाणाञ्शिखण्डी बह्वशोभत ।
राजतः पर्वतो यद्वत्त्रिभिः शृङ्गैः समन्वितः ॥ १८
सोऽतिविद्धो महेष्वासः सूतपुत्रेण संयुगे ।
कर्णं विव्याध समरे नवत्या निशितैः शरैः ॥ १९
तस्य कर्णो हयान्हत्वा सारथिं च त्रिभिः शरैः । C 8 3035 B 8 61 20 K 8 63 24

---

नरनागाश्व° Ca cites कलिल — b) Ś1 पत्तिध्वज, K4 पत्तिध्वज-

11 a) V1 B3 5 S (except T1) तु (for च) — b) M1 धृष्टद्युम्न सुतस्तव — d) V1 B Da1 D1 5 6 सेनया वृत S महासेन (T1 भीमसेन, M2-4 महावीर्य) समभ्ययात्

12 K1 om 12a-13b — a) M3 नकुल B1 M2 4 वृषसेनस् K3 V1 B Da1 Dn1 D1 2-5 7 S (except T2) तु (for च) — b) T2 G1 M1 2 4 चित्रसेनो B1 T2 G1 M युधिष्ठिर — d) D6 8 प्रतापवान्, G1 समर्पयत् (for समभ्ययात्)

13 K1 om 13ab (cf. v. l. 12) — a) M2-4 सात्यकिं G1 M2-4 शकुनिश्च B5 चैव (for चापि) — b) V1 B D (except D2) T3 G3 द्रौपदेयाश्च (for भीमसेनश्च) S (except T1) तु (for च) K3 भीमसेन समभ्ययात् — c) B2 T3 G3 अर्जुनश्च Da1 D1 5 समरे (for च रणे) V1 B1 3 4 D3 4 7 Ca यत्तो, B2 मत्तो, Dn1 D8 यातं, D2 6 क्रुद्धो, T1 2 G1 2 M यांत, T3 G3 यातो (for यत्त) — d) B2 T1 3 G2 3 द्रोणपुत्र B2 T3 G2 3 महारथ, T2 प्रतापवान् (for महारथ)

14 a) Dn1 D3 युधामन्युर्महेष्वासो — b) Ś2 K1 4 B2-4 [ऽ]भ्यद्रवद्, K3 न्यपतद्, D6 ह्यभ्ययाद् (for ऽभ्यपतद्) Dn1 D8 गौतमेनाभ्ययाद्रणे — d) Ś2 उत्तमौज समाद्रवत्, K1 °मोज स°, K3 °मौजा म° — For 14, S subst.

598* युधामन्युं कृपो राजन्नुत्तमौजसमाहवे ।
कृतवर्मा महेष्वास पर्यवारयदाहवे ।

[(L. 1) T1 G1 युधामन्यु G1 2 कृप T2 उत्तमोन° T3 G उत्तमौ(G1 2 °मो)नास्तु कौरव (G1 °स, G2 °व, G3 °वान्) (for the posterior half) — (L. 2) M2 4 महेष्वासं T3 G संयुगे कृतवर्माणमायान्तं पर्यवारयत् ]

15 b) D3 transp च and तव D6 transp पुत्रांश्च and तव K1 मारिप, D8 S भारत (for मारिष) — T2 om 15cd — c) K1 4 D8 T1 G1 2 M महानीकान् (for सहा°) T1 3 G महाराज, M महेष्वासान् (for महाबाहुर्) — d) T1 ह्येक (for एक) K3 V1 B Da1 Dn1 D1 3-5 7 8 न्यवारयत् (for [अ]भ्यवारयत्)

16 a) Ś1 V1 B (except B3) D (except D2) S तु (for च) — b) K4 व्यचरतम् — c) K1 भीष्महस्ता (sic)

17 a) K1 प्रतिरुद्धस्; K3 V1 B D2-4 7 T1 G1 2 प्रतिरब्धस्, K4 °रुधस् (sic), Dn1 D3 8 °विद्धस्, T2 M निरुद्धस्तु (for प्रतिरब्धस्) G1 2 क्रुद्धो (for कर्णो) T3 G3 निरस्तस्तु तत क्रुद्धो — b) D8 रोष S रोषात्प्रचलकुण्डल — cd) T2 M transp त्रिभिर्बाणैर् and भ्रुवोर्मध्ये D2 कवचं च (for भ्रुवोर्मध्ये) K3 B D2-7 [अ]भ्यताडयत्; T1 3 G2 3 व्य(G2 ह्य)विध्यत, T2 M अताडयत्, G1 व्यवध्यत (for व्यताडयत्)

18 a) K3 धारयंश्च, Da1 D5 वारयंस्तु (for धारयंस्तु) K4 B1 2 शतान्, D3 ततो (for स तान्) K3 D1 5 बाणा (for बाणाञ्) S धारयन्स शि(T1 °क्षिशि, T2 M °न्स तु)तान्बाणान् — b) V1 बहुशोभवत् (sic), D1 बहु शोभत — c) D1 महागजो ततो यद्वत् (sic) — d) K3 B5 D3 T2 त्रिभिः शृङ्गैः समवत, V1 B1-4 Da1 D1 3-5 7 त्रिभिः शृङ्गैरिवोच्छ्रितैः (B1 °श्रितैः, B2 °छ्रित), Dn1 त्रिभिः पत्त्रिभिरन्वित, Bom. ed. त्रिभिः शृङ्गैरिवोत्थितैः

19 d) D8 सप्तत्या (for नवत्या)

20 D6 om (hapl.) 20-23 D2 transp 20ab and 20cd followed by the repetition of 20ab — a) G1 महाहत्वा (sic) (sup. lin. °राज) (for हयान्हत्वा) — c) D2 निर्ममाथ, Ca उन्म° (as in text) Ś1 K2 4 रथ, K1 om (for ध्वज) S क्षिप्र (for चास्य) — d) T1 क्षुरस्त्रेण

20 24 उन्ममाथ ध्वजं चास्य क्षुरप्रेण महारथः ॥ २०
हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
शक्तिं चिक्षेप कर्णाय संक्रुद्धः शत्रुतापनः ॥ २१
तां छित्त्वा समरे कर्णस्त्रिभिर्भारत सायकैः ।
शिखण्डिनमथाविध्यन्नवभिर्निशितैः शरैः ॥ २२
कर्णचापच्युतान्बाणान्वर्जयंस्तु नरोत्तमः ।
अपयातस्ततस्तूर्णं शिखण्डी जयतां वरः ॥ २३
ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत् ।
तूलराशिं समासाद्य यथा वायुर्महाजवः ॥ २४
धृष्टद्युम्नो महाराज तव पुत्रेण पीडितः ।
दुःशासनं त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ॥ २५
तस्य दुःशासनो बाहुं सव्यं विव्याध मारिष ।
शितेन रुक्मपुङ्खेन भल्लेन नतपर्वणा ॥ २६
धृष्टद्युम्नस्तु निर्विद्धः शरं घोरममर्षणः ।
दुःशासनाय संक्रुद्धः प्रेषयामास भारत ॥ २७
आपतन्तं महावेगं धृष्टद्युम्नसमीरितम् ।
शरैश्चिच्छेद पुत्रस्ते त्रिभिरेव विशां पते ॥ २८
अथापरैः सप्तदशैर्भल्लैः कनकभूषणैः ।
धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्दयत् ॥ २९
ततः स पार्षतः क्रुद्धो धनुश्चिच्छेद मारिष ।
क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ॥ ३०
अथान्यद्धनुरादाय पुत्रस्ते भरतर्षभ ।
धृष्टद्युम्नं शरव्रातैः समन्तात्पर्यवारयत् ॥ ३१
तव पुत्रस्य ते दृष्ट्वा विक्रमं तं महात्मनः ।

---

(for °प्रेण) S K1 2 4 महाबल (for °रथ )

21 D6 om. 21 (cf v l 20) K3 B3 om (hapl ) 21ab — a) K3 हताश्वाच Dn1 T1 3 G स हताश्वात्ततो यानाद्. — b) Da1 D5 अवप्लुत्य; Cn °प्लुत्य (as in text). — After 21ab, T1 2 G2 3 M1–4 ins

599* संछिन्नकार्मुको राजन्सूतपुत्रेण संयुगे।

— G1 om (hapl.) 21c–22d T1 reads 21c–24b twice.

22 D6 G1 om 22 (cf v l 20, 21) — a) K4 तं T2 भित्त्वा (for छित्त्वा)

23 b) G2 विजयस् (for वर्जयंस्) K4 Dn1 T1 (both times) G2 नरोत्तम (T1 °मं) — c) Ś2 अपायतस्, Da1 अपधावत्, M अपा(M1 °प)यासीत् (for अपयातस्) Ś K1 2 4 तात (for तूर्णं). — d) B1.4 5 D2.4 7 M भृशविक्षत ; B3 तस्य वीक्षत , Dn1 भृशविह्वल°, T (T1 both times) G शरविक्ष(G3 °क्षि)त (for जयतां वर )

24 a) Ś K1.2 4 महाबाहु (K1 °हुं) (for °राज) — K1 om (hapl.) 24b–26a — b) K3 नाशयत्; B5 T2 G1 M [अ]पातयत्, T1 (both times) [अ]सयुगे (for [अ]शातयत्) B4 T2 पाडुसैन्यान(T2 °सैन्यम)शातयत् — d) K3 V1 B2 3 Da1 D1 3–5 7 8 महाबल M भृश वायुर्विवानिव

25 K1 om 25 (cf, v l 24) — d) K3 B5 Dn1 D2–4 6 7 T1 3 G प्रत्यविध्यत् (for अभ्य°)

26 K1 om 26a (cf v l. 24) — a) G2 राजन् (for बाहु) — b) T2 सम्यग् (for सव्यं) — c) K3 B4 स तेन, Dn1 D7 8 T1 सितेन (for शितेन) D8 नतपुङ्खेन (for रुक्म°) — d) K3 V1 B D (except D8) T1 [आ]नतपर्वणा

27 a) Ś K2 4 तु निर्भिन्न ; Dn1 ततो विद्ध°; T2 3 G2 तु संक्रुद्ध° (for तु निर्विद्ध°) — B5 T2 G om 27bc — b) B3 अमर्षणं — c) T1 दु शासनस्य K1 संक्रुद्धा. T2 M1–4 दु शासनांतकं क्रुद्ध ; M1 विभासनांतकं क्रुद्ध. — d) B3 सायक ; D2 पार्थिव ; D4 भारत . Dn1 प्रेषयंस्तनयाय ते, S प्रेषयत्तनयस्य ते — After 27, T2 G ins

600* आशीविषसम बाणमाशु भास्करहसम् ।

28 a) B1 3 तं पतंतं (for आप°). K4 तु वेगेन; G1.2 महावेगात् (for °वेग) — b) D1 धृष्टद्युम्नं K4 धृष्टद्युम्नश. रीरितं (sic). — c) Dn1 शार (for शरैश्) T2 M बाणं तं (for पुत्रस्ते)

29 a) B3 सप्तशरैर् (for °दशैर्) Ś K1.3 4 अथान्यै (K1 °न्या) सप्तदशभिर्; S अथापरैः षोडशभिर् ❀Cc सप्तदशा संख्या येषां सप्तदशभिरित्यर्थ ।❀ — b) S2 बाणै (for भल्लै ) K3 B1.3 4 G2 कनकभूषितै — d) K3 V1 B D S चार्पयत् (for चार्द°)

30 a) Dn1 तु (for स) S तस्य सेनापति क्रुद्धो. — c) K2 स तीक्ष्णेन

31 a) Ś2 अन्यथा (for अथान्यद्) — b) K3 V1 B D S प्रहसन्निव, K4 भरतर्षभ (for भरतर्षभ) — d) T2 M रुरुधे बली (for पर्यवारयत्)

32 a) D5 तत्र (for तव) T2 M तत्र (M1 °स्य) भारत पुत्रस्य — b) K3 V1 B Da1 D4 6 7 विक्रमं सु°, Dn1 °मे तं, D2 °मं ते, T2 M °मेण (for °मं तं) — c) K4 व्यसहत; V1 B D S व्य(D8 T1 वि)स्मयंत (for व्यहसन्त) M योधा . — d) B5 Dn1 S सिद्धाश्चाप्सरसस्तथा — After

व्यहसन्त रणे योधाः सिद्धाश्चाप्सरसां गणाः ॥ ३२
ततः प्रववृते युद्धं तावकानां परैः सह ।
घोरं प्राणभृतां काले घोररूपं परंतप ॥ ३३
नकुलं वृषसेनस्तु विद्ध्वा पञ्चभिरायसैः ।
पितुः समीपे तिष्ठन्तं त्रिभिरन्यैरविध्यत ॥ ३४
नकुलस्तु ततः क्रुद्धो वृषसेनं स्मयन्निव ।
नाराचेन सुतीक्ष्णेन विव्याध हृदये दृढम् ॥ ३५
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
शत्रुं विव्याध विंशत्या स च तं पञ्चभिः शरैः ॥ ३६
ततः शरसहस्रेण तावुभौ पुरुषर्षभौ ।
अन्योन्यमाच्छादयतामथाभज्यत वाहिनी ॥ ३७
दृष्ट्वा तु प्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः ।
निवारयामास बलादनुपत्य विशां पते ।
निवृत्ते तु ततः कर्णे नकुलः कौरवान्ययौ ॥ ३८
कर्णपुत्रस्तु समरे हित्वा नकुलमेव तु ।
जुगोप चक्रं त्वरितं राधेयस्यैव मारिष ॥ ३९
उलूकस्तु रणे क्रुद्धः सहदेवेन वारितः ।
तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् ।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ४०
उलूकस्तु ततो यानादवप्लुत्य विशां पते । C. 8. 3110 B. 8 61 44 K. 8. 64. 12

32, K4 V1 B D (except D2) S ins..

601* धृष्टद्युम्नं न पश्याम घटमानं महाबलम् ।
दुःशासनेन संरुद्धं सिंहेनेव महागजम् ।
ततः सरथनागाश्वाः पाञ्चालाः पाण्डुपूर्वज ।
सेनापतिं परीप्सन्तो रुरुधुस्तनयं तव ।

[(L. 1) B1 5 Da1 D1 5 T2 3 G त्व(B1 अ-, T3 G च)-पश्याम, Dn1 T2 M तु पश्यामो (for न पश्याम) B1 महारथ; Dn1 D2 महारथना, M यथाबल (for महा°) — (L. 2) V1 B1 5 D5 S (except M1) संरुद्ध (for संरुद्ध). B5 Da1 Dn1 D1 5 S महाद्विप (for °गजम्) — After line 2, S ins an addl colphon (*Adhy name* M1 शिखण्डिपराजय° — *Adhy no.*. T1.2 M 67, T3 G 68) — Before line 3, S (except T2) ins संजय — (L 3) D2 न ते (for तत) T2 तु रथ° (for सरथ°) Some MSS पचाला K4 पाडुपूर्वज, V1 B1 Da1 Dn1 D1 2 5 सजये सह, S पांडुसजया (for °पूवज) — (L 4) K4 सेनापत्त शरीप्सतो (sic) M1 रुरुधुस् (for रुरुधुस्) ]

33 a) T2 प्रववृधे (for °वृते) — b) K2 घोरां; K4 घोर°; M घोरे S घोरप्रद (for प्राणभृता) — d) K2 V1 B D S भीम° (for घोर°) B5 समंतत (for परतप)

34 a) S नकुलो B5 S वृषसेन B3 च (for तु) — b) K2 V1 B1-4 D2-5 6-8 भित्वा (for विद्ध्वा) B3 T2 आशुगै (for आयसै) — c) K3.4 V1 B D तिष्ठन्तै (K4 B3 °ष्ठन्त) (for तिष्ठन्त) — d) B5 Dn1 T2 3 G3 M त्रिभिर्भूयोऽस्य(B5 °र्भूयाप्य-; Dn1 °भूयोप्य; M1 भूयोत्य) विध्यत

35 a) S (except T3 G3) नकुलं K1 2 V1 B D (except. Dn1) S (except T2) शूरो (for क्रुद्धो) — b) B3 वृद्धसेन V1 B1-4 D2-7 हसन्निव (for स्मय°) — d) B3 समरे (for हृदये) K2 V1 B D T2 भृशं; M नृप (for दृढम्) T1 3 G हृदये प्रत्यविध्यत

36 b) Some MSS शत्रुकर्षण, B2 5 D7 °कर्षण; Dn1 T1.2 G M1 °तापन (for °कर्शन) — c) Da1 D1 5 S सप्तत्या (for विंशत्या) — d) S सूत चैवास्य सप्तभि

37 a) T1 G1 2 शरसहस्रैस्तु — b) B5 पुरुषर्षभ; G1 भरतर्षभौ — c) K1 V1 आ(V1 अ)च्छादयेताम्; D1 °दयेत B5 T1.3 G प्र(B5 आ)च्छादयेताम(T1 G1 °ब)-न्योन्यं — d) K2 3 B1 4 D7 अथो(K4 °थ)भज्यत, Dn1 ततोभ°; T1 G1 2 तावपश्यत; T3 G3 तदाभज्यत T2 वाहिनीं, M भारती (M1 by corr °त) (for वाहिनी)

38 a) K3 V1 B1-4 Da1 D1.3-7 8 स दृष्ट्वा; S दृष्ट्वा वि- (for दृष्ट्वा तु) D8 प्रद्र(marg °द्र)तां (for प्रद्रुतां). — b) T1 तेजस (for सूतज) — c) G3 वारयामास बलवान् — d) K3 B1 3 4 D1 4 7 T2 अनुसृत्य, B2 5 अन्व(B5 °नु)मान्य, Da1 D1 5 अनुपत्य; Dn1 द्रवमाणं; D8 द्रवमाणां, T1 G1 अनुपे(G1 °वृ)त्य, G2 उदपत्य, M अनूत्पत्य (for अनुपत्य) — After 38cd, M ins

602* एतस्मिन्नन्तरे कष्टं युद्धमासीद्विशां पते ।

— e) K4 निवर्ते (for निवृत्ते) B2 5 Dn1 D8 S सैन्ये (for कर्णे) — f) T2.3 G3 M तु कुरून् (for कौरवान्). — After 38, T G M1 ins

603* वृषसेनस्तु पाञ्चालान्पित्रा सार्धं विशां पते ।

39 T1 om 39-40 — b) B2 हत्वा, D2 जित्वा (for हित्वा) K3 Dn1 आहवे; B1 D5 8 एव च (for एव तु) S (T1 om.) हित्वा (T2 M1 [*sup lin* ] भित्वा) राजन्युधिष्ठिरं. — c) K3 V1 B D S (T1 om ) त्वरितो — d) S1 K2 4 T3 G3 [ह्य]त्र (for [स्यै]व) D2 6 राधेयस्य महात्मन

40 T1 om 40 (cf. v l 39) — b) T2 3 G मारिष (for वारित ) — After 40ab, T2 3 G ins

604* निवारित शरशतैः क्रुद्धेन रणमूर्धनि ।

— c) D5 हित्वा (for हत्वा) — Dn1 om (hapl ) 40c-43b

41 Dn1 om. 41 (cf v 1. 40) — ab) S1 अवप्लुत्य°

2110 61 44 64 12 त्रिगर्तानां बलं पूर्णं जगाम पितृनन्दनः ॥ ४१
सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः ।
ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ॥ ४२
सौबलस्तस्य समरे क्रुद्धो राजन्प्रतापवान् ।
विदार्य कवचं भूयो ध्वजं चिच्छेद काञ्चनम् ॥ ४३
अथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत ।
सारथिं च महाराज त्रिभिरेव समार्दयत् ।
अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम् ॥ ४४
ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ।
आरुरोह रथं तूर्णमुलूकस्य महारथः ।
अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः ॥ ४५
सात्यकिस्तु रणे राजंस्तावकानामनीकिनीम् ।
अभिदुद्राव वेगेन ततोऽनीकमभिद्यत ॥ ४६
शैनेयशरनुन्नं तु ततः सैन्यं विशां पते ।
भेजे दश दिशस्तूर्णं न्यपतच्च गतासुवत् ॥ ४७
भीमसेनं तव सुतो वारयामास संयुगे ।
तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम् ।
चक्रे लोकेश्वरं तत्र तेनातुष्यन्त चारणाः ॥ ४८
ततोऽपायान्नृपस्तत्र भीमसेनस्य गोचरात् ।
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् ।

---

D2 transp ततो यानात् and अवप्लुत्य — After $41^{ab}$ T1.3 G ins

605* अपयातस्ततस्तूर्णमुलूको रणमूर्धनि ।

— c) K3 V1 B1.2 D2-4.6.8 S तूर्णं (for पूर्णं) — d) B3 जगाम पितुरन्तिक — B5 Da1 D1.5 subst for $41^{cd}$ K4 ins. after 41 B1 after $41^{ab}$

606* रथमन्य समास्थाय जगाम पितुरन्तिकम् ।

42 Dn1 om. 42 (cf. v l. 40). — a) D5 शकुनिर् — c) Ś1 K3 चल्लेन

43 Dn1 om. $43^{ab}$ (cf. v l. 40) — b) V1 B3 D6.7 राजा (for राजन्) D3 विशां पते (for प्रतापवान्) — After $43^{ab}$, G3 ins

607* सारथिं प्रेषयामास यमस्य सदनं प्रति ।

— c) B5 Dn1 S वीरो; D6 भूमौ (for भूयो)

44 a) B1 D2-4.6.7 तथैनं, T1 अथैकं (for अथैनं) — b) K3 सात्यकिं T1 समविध्यत; G3 प्रत्यपद्यत (for °विध्यत) — d) Ś1 K1 D8 समर्दयत्; K3 V1 B Da1 Dn1 D1-3.7 S सम(B Da1 D1.8 °मा)र्पयत्, D4 समार्पयन्; D5 °प्येयेत् (sic) (for °र्दयत्) D6 शरैर्निन्ये यमक्षय (= $44^{f}$) — e) G2 त्वरित — f) K3 चरेन, G1.2 पुनर् (for शरैर्).

45 d) K1 B3 D2-4.7 S महात्मन ; K4 °रथ (°रथ) — e) K3 च (for [अ]थ) K3 D5 तं शीघ्रं, Da1 D1.5 तूर्णं स (for शीघ्रं स) B5 अपोवाह ततस्तूर्णं, Dn1 D3 °वाह रथ तूर्णं (D3 शीघ्र) — f) B5 Da1 Dn1 D1.5 शैनेयशरपीडितं (B5 Dn1 °त) — For $45^{ef}$, S subst..

608* अपोवाह रथस्थं तं सात्यकस्याजिसागरात् ।
[M1.3 रथ तस्य (for रथस्थं त) T2 सात्यकिश्च G1.2 सात्यकस्याथ (G2 °क° माजि) सगरात्, M सत्यकस्यातिसंगरात् ]

46 a) S शैनेयस् (for सात्यकिस्) T G M1 ततो (for रणे) B2 (marg as in text) जेतु (for राजस्). — d) D6 सैन्यान् (for ऽनीकम्) V1 B1.3-5 Da1 D1-5.7.8 S अभज्यत, B2 अभक्षयत् (for अभिद्यत)

47 a) K3 °नुन्नंत (sic), V1 B1-4 Da1 D1.3-5.7 °संछन्नं; D2 °संघनं (sic), D6 °सनुनं (for °नुन्नं तु) — b) K3 भूत; V1 B Da1 Dn1 D1.3-5.7 S तव (for तत) — c) K1.3 दश दिश (for दश दिशस्) D1 तूर्णे (for तूर्णं) — d) Dn1 न्यपतंश्च, T2.3 G3 अपतच्च (for न्यप°) Dn1 गतासव, T1.3 G2.3 गतासु वै, Cc गतासुवत् (as in text)

48 c) B2 ततो (for तं तु) — f) D1.2 तेनातुष्यत (D2 °प्यति), T2 तं नातुष्यंत, G1.2 तेन तुष्यंति, M तेनातुष्यंस्तु V1 B (except B2) Da1 D1.3-5.7 वै जना ; D8 चारिण ; S क्षत्रिया (for चारणा ) — After 48, D6 ins

609* शत्रुणा विजितं ज्ञात्वा भयात्सुपुरुषर्षभ ।

49 a) Da1 D1.5 M2-4 ततोपयात्, Dn1 तत प्रायान् (for ततोऽपायान्) Dn1 नरपतिर्; D3 त्वरितो°, S (except G1)नृपस्त(T2 द्रुतं स)स्माद्; G1 नृपस्तस्माद् (for °स्तत्र) D6 ततोपायानस्त्वरितो (sic) — b) Dn1 T1.3 G भीमसेनशरार्दित (T3 G3 °ता ), T2 M °भयार्दित.. Ca cites गोचरात् (as in text) — D3 om $49^{cd}$. — c) D6 तु तत् (for तत ) — e) Ś K1.2 तत्रावापो; K4 तत्र नादो, V1 B Da1 Dn1 D1-7 तत्र नादो; D8 G1.2 तत्रारावो (for तत्र रावो) — Ś K1.2 om. (hapl.) $49^{f}$–$51^{e}$. — f) K3.4 V1 B D T G भीमसेन (G1 °सेव).

तत्र रावो महानासीद्भीममेकं जिघांसताम् ॥ ४९
युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छिदे ।
अथान्यद्धनुरादाय कृपः शस्त्रभृतां वरः ॥ ५०
युधामन्योर्ध्वजं सूतं छत्रं चापातयत्क्षितौ ।
ततोऽपायाद्रथेनैव युधामन्युर्महारथः ॥ ५१
उत्तमौजास्तु हार्दिक्यं शरैर्भीमपराक्रमम् ।
छादयामास सहसा मेघो वृष्ट्या यथाचलम् ॥ ५२
तद्युद्धं सुमहच्चासीद्घोररूपं परंतप ।
यादृशं न मया युद्धं दृष्टपूर्वं विशां पते ॥ ५३
कृतवर्मा ततो राजन्नुत्तमौजसमाहवे ।
हृदि विव्याध स तदा रथोपस्थ उपाविशत् ॥ ५४
सारथिस्तमपोवाह रथेन रथिना वरम् ।
ततस्तु सत्वरं राजन्पाण्डुसैन्यमुपाद्रवत् ॥ ५५ C. 8 3126 B 8 61 60 K 8 64 28

इति श्रीमहाभारते कर्णपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

Ś1 भीममापतयत्क्षितौ, K1 भीममापातयत् क्षितौ (sic), D6 T1 भीममेनजिघांसया

50 Ś1 K1.2 om 50 (cf. v. l. 49) — ^ab) K3 धनुरस्याशु वाजिन (for ^b) D5.6 युधामन्युश्च विक्रान्त कृपस्य धनुराच्छिनत् — ^c) K4 अथान्यधनुरादाय

51 Ś1 K1.2 om. 51^a (cf. v. l. 49) — ^ab) T2 धनु (for ध्वज) Da1 D1.2 transp सूत and छत्र V1 वज्र (for छत्र) K1 D2 चापातयन् T2 क्षितौ (for क्षितौ) — ^c) V1 M1.3.4 ततोपयाद्, B3 °पायद्; Dn1 तत मायाद्, T1.2 G ततो ययौ Dn1 [आ]शु (for [ए]व) — ^d) K1 युधामन्युं T2 महावल- (for महारथ )

52 ^a) T2 G1.2 उत्तमोजास् K3 V1 B1.2.4.5 Dn1 D1-4.5.7 च (for तु) S वार्ष्णेयं (for हार्दिक्य) — ^b) K2 lacuna for शरै B3.4 Da1 D1 अभीद् (D1 °द्) (for भीम ) D5 भीममेनपराक्रम ; S कृतवर्माणमाहवे — ^c) D2.6 T2.3 G समरे (for सहसा) — ^d) K3 V1 B1-4 D5.6-8 S मेघो वृष्ट्येव पर्वतं; B3 Da1 D1.2.3 वृष्ट्या मेघ (D2 मेघो वृष्ट्या) इवाचल

53 B2 om 53^c-54^b — ^a) K3 B3 तद्युद्ध सुमहानासीद्; V1 B1.3.4 D2.4.6.7 °द्धमासीत्सुमहद्; D2.6 T1 °द्धमभवद्राजन् (T1 °चत्र) — ^b) K2.4 परतप ; Dn1 D2 विशां पते; D3.6 मयावह, M3 परं त्वया (for परतप) — ^c) Ś K1.2.4 पूर्व (K1 °र्वं-), Dn1 D3 राजन्; D2.6 दृष्ट (for युद्धं) — ^d) Ś1 दृष्टा, D3.6 युद्ध (for दृष्ट-) Dn1 D3 न च श्रुत (for विशां पते)

54 B3 om. 54^ab (cf v. l. 53) — ^c) M3-4 प्रति- (for हृदि) K3 V1 B D S सहसा (Dn1 °मरे) (for स तदा) — ^d) B1.2.4 Da1 D1.2.6.8 M स रथोपस्थ आ(M1 °स्थमा)विशत्, B3 स रथोपस्थमुपाविशत् (hypermetric), B5 रथोपस्थमाविशत् (submetric)

55 ^a) S त सारथिर(T2 M °स्त्व)पोवाह — ^b) Ś1 रथिन Ś1 K2 V1 M1 वर — ^c) Dn1 सात्वतो; D5 S सात्वतो (for सत्वरं) K4 कृतवर्मा ततो राजन् — ^d) T1.2 G अभिद्रवत् (for उपा°) — For 55^cd, K3 V1 B Da1 D1.3-7 subst..

610* कुरुसैन्यं तत सर्वं भीमसेनमुपाद्रवत् ।

K4 ins after 55, V1 B Da1 D1.3-7 ins after 610*, Dn1 after 613*, D8 after 612* two passages given in App I (No 17 and No. 18). Dn1 D3 ins after 55 S after the colophon

611* युधिष्ठिरश्चित्रसेन शरवर्षैरवाकिरत् ।
चित्रसेनोऽपि कौन्तेय सक्रुद्ध समवारयत् ।
मुहूर्ताद्विमुखीकृत्य चित्रसेन स धर्मराट् ।
तावक सैन्यमभ्यघ्नत्समन्ताद्विशिखैः शरैः ।

[Before line 1, S (except T2) ins संजय.. — (L 1) T1 युधिष्ठिरं D3 अवाकिरन् — (L. 2) D3 सक्रुद्ध — (L. 3) D3 मद्राड् (for धर्म°) — (L. 4) Dn1 D3 अभ्यघ्नन् ]
Dn1 D3 cont.

612* तस्मिन्प्रवृत्ते तुमुले नरवीरजनक्षये ।
दुर्योधन क्रोधमुपेत्य तीव्र
क्रोधाग्निनासौ परिदह्यमान ।
अन्य रथं समुपेत्याशु चैव
भीम प्रविव्याध सुचित्रपुङ्खैः । [5]
दुःशासनोऽथापि च चित्रसेनो
दुर्द्यूतसेवी कितव सौबलश्च ।

[(L 1) Dn1 वरनागनरक्षये — (L 3) D3 [अ]थ (for [अ]मो) Dn1 परिदह्यमाना — (L. 4) D3 समुपेत्याशु (sic), — (L 5) D3 सु- (for सु ) — (L. 6) Dn1 [ऽ]थ (for ऽपि) Dn1 om च — (L 7) Dn1 देवी (for सेवी) ]
Dn1 cont.

613* गजानीकैः सर्वतो भीमसेनं
तथाभ्यर्दितं सहसाभ्यधावत् ।

On the other hand, S cont. after 611*.

614* तावकाश्च महाबाहो दुर्योधनपुरोगमाः ।
[T1 तावकानां, T2 G °का हि ]

वेनास्मि वाच्यो न त्वयाहं कदाचि-
न्मा मा वोच क्रूरमिहाद्य पार्थ ।
नासद्विधो वै भवता तु वाच्यो
यथा भवान्सर्वलोकस्य वाच्य ।
एवं हि मा ते ब्रुवतो नरेन्द्र
कथं न दीर्येच्छतधाद्य जिह्वा ।
अहो यतेदं सुनृशंसरूप
भवानपि ह्यत्र कर्णाद्बिभेति ।

22

After the first occurrence of 8 49 81, S ins

नकुलेन राजन्गजवाजियोधा
हताश्च शूरा सहसा समेत्य ।
त्यक्त्वा प्राणान्समरे युद्धकाङ्क्षी
स मामुपालब्धुमरिंदमोऽर्हति ।
कृतं कर्म सहदेवेन दुष्कर
यो युध्यते परसैन्यावमर्दी ।
न चाब्रवीत्किंचिदिहागतो बली
पश्यान्तर तस्य चैवात्मनश्च ।
धृष्टद्युम्न सात्यकिर्द्रौपदेया
युधामन्युश्चोत्तमौजा शिखण्डी ।
एतेऽद्य सर्वे युधि सम्प्रपीडिता-
स्ते मामुपालब्धुमर्हन्ति न त्वम् ।
त्वन्मूलमस्माभिरिदं हि वैर
प्राप्त तथा व्यसन चातिघोरम् ।
द्यूते प्रमत्तेन कृतं त्वयासकृ-
त्कस्मादुपालब्धुमिहार्हसि त्वम् ।
त्वमेव राजन्सततं प्रमत्त-
स्त्वमेव मूढो भारतानामसाधु ।
त्वा प्राप्य राज्य च विनष्टमेत-
च्चाहो महत्पाण्डवाश्चैव दासम् ।
त्वत्त कृते स्याद्व्यसनमद्य त्व
राज्यस्य नाशो ह्यभिमन्योश्च घोर. ।
आत्मानमेवं सुनृशंसरूपं
ज्ञात्वा किमर्थं गर्हसे माद्य वीर ।
लज्जस्व राजन्यदि तेऽस्ति लज्जा
तूष्णीं भूत पश्य सर्वं कृतं न ।
भीमो नित्य समरस्य कर्ता
दर्पस्य भेत्ता पुनरेव नित्यम् ।
स्वयं ह्यशक्तेन नरेन्द्र युद्धे
नरेण कार्यां सततं क्षमैव ।

23

$T_{1.3}$ G M ins after 8 51 81, $T_2$ after the first occurrence of 8.51 82

अद्य कर्णं रणे ग्रस्तं पश्यन्तु कुरवस्त्वया ।
प्रतपन्तमिवादित्यं स्वर्गद्वारगतं यथा ।
अद्य ते समरे वीर्यं पश्यन्तु कुरुयोधिन ।
सूतपुत्रे हते पार्थे जानन्तु त्वां महारथम् ।
अद्य कङ्का वला गृध्रा वायसा जम्बुकास्तथा ।
विप्रकर्षन्तु गात्राणि सूतपुत्रस्य भारत ।
अद्याधिरथिराक्षिप्तो निहतश्च त्वया रणे ।

---

परसंख्या($M_3$ °ख्या)न् $T_1$ अमृष्याद् — (L. 18) $M_1$ ममा-वोच (for मा मा वोच) — (L 20) $T_2$ M भवेद् (for यथा). — (L 21) $T_1$ याते, $T_3$ $G_3$ मां ते — (L 23) $T_1$ यनेन — (L. 24) M कामान्म($M_1$ °मा न)नीति (for कर्णाद्बिभेति) $T_{1.3}$ G वामादवोचरत्वमिदाप यद्दै

22

(L. 1) $T_2$ -वाजियूथा, M °योधा (for °योधा) — (L. 2) $T_1$ $G_1$ वीरा ; $T_2$ शूद्रा (for शूरा) — (L 6) $T_1$ $G_2$ परसैन्याप($G_2$ °सी)मर्दन , $M_1$ °न्याभिमर्दं — (L. 7) $T_2$ om इहागतो बली — (L. 8) $T_2$ $M_1$ चास्य (for तस्य) $T_3$ $G_3$ चापि (for चैव) — (L. 10) $T_{2.3}$ $G_3$ चोत्तमोजा $T_1$ शिखिन — (L. 11) $G_1$ सर्व $T_1$ योधे सर्वे युधि संपीडि-ताहो — (L. 14) $M_{1.3}$ प्राप्तं — (L. 15) $T_{1.2}$ $G_2$ द्यूत- $T_2$ च, $M_{1.3}$ [अ]द्य, $M_{2.4}$ स (for [अ]सकृत) — (L. 16) $T_{1.3}$ $G_1$ तस्माद् (for कस्माद्) $T_1$ अथ युद्धं (for अर्हसि त्वम्) $M_1$ स कस्मान्मामुपालब्धुमर्हसि त्व — (L 17) $G_2$ राजा $T_2$ om सततं $G_2$ प्रवृत्त (for प्रमत्तम्). — (L 18) $T_{1.2}$ $M_{2-4}$ भरतानाम् $T_1$ चैव साधु , $T_3$ $G_{3.3}$ असाधु — (L. 19) $T_2$ प्राप्त- (for प्राप्य) — (L 20) $T_1$ $G_1$ चापि (चैव) $T_2$ प्राप्ताश्च ते पाण्डवे याति दास्य — (L. 21) $T_1$ $G_1$ कृतेऽस्मद्, $G_2$ $M_{3.4}$ कृतं ($G_2$ $M_3$ °न-) स्याद् (for कृते स्याद्) $M_1$ -दुर्ग (for -दुःख) — (L. 22) $T_1$ $G_3$ M [ऽ]भिमर्शश्च, $T_2$ °मानस्य (for °मन्योश्च) — (L. 23) $T_1$ स चात्मान वै सुनृशसस्वरूप ; $G_3$ न चात्मान नैव नृशसरूप — (L. 24) $T_2$ गर्हसि $G_2$ मा च वीरं — (L. 25) $M_1$ लज्जास्व — (L 26) T कृतमद्य ; $G_3$ कृत तव — (L 27) $T_1$ भीमो हि नित्य ; $T_3$ M नहि मानित्वं (for भीमो नित्य) $G_2$ समरे यस्य (for समरस्य) — (L 28) $T_3$ दृढमर्ता , M दृढस्य ,भेत्ता (for दर्पस्य भेत्ता). — (L. 30) $T_{2.3}$ $G_3$ कार्यं

23

(L. 3) $G_3$ मे (for ते) $T_3$ वीरा (for वीर्यं). — (L. 4) $T_3$ G वैकर्तने (for सूतपुत्रे) $M_1$ त्वा (for त्वां) — (L 5) $T_2$ काका वला (for कङ्का वला) — (L. 6) $T_3$ $G_3$ प्रविकर्षंतु, $M_{2-4}$ विकर्षंतु च (for विप्रकर्षन्तु) $G_2$ सूतपुत्रं तु (for °पुत्रस्य) $T_1$ भारत ; $T_2$ मारिष (for भारत) — (L. 7) $T_1$ M अथाधि($T_1$ °थि)रथिराक्षिप्तो, $T_3$ G अद्य सारथिना क्षिप्तो

कृष्णा शोकमापन्ना पाण्डवानां मुद तथा ।
अद्य त्वां प्रतिनन्दन्तु पाञ्चाला पाण्डवै सह ।
यथा वृत्रवधे वृत्ते देवा सर्वे शतक्रतुम् ।
अद्य कर्णं रणे हत्वा प्राप्य सर्वोत्तमं यश ।
त्रिलोके विश्रुत पार्थ भव बन्धुपुरस्कृत ।
नारसिंहवपु कृत्वा यथा शान्तो महासुर ।
हिरण्यकशिपुर्दैत्यो विष्णुना प्रभविष्णुना ।
तथा त्वमपि राधेय घोरं कृत्वा महद्वपु ।
जहि युद्धे महाबाहो शायस्व च नयान्वकान् ।

24

Ś K1.3 T3 ins after 8 52.22 K3 4 V1 B (B2 both times) D Ca.c ins after 801*

अद्य राज्ये करिष्यामि धृतराष्ट्र जनेश्वरम् ।
अद्य कर्णस्य चक्राङ्गा क्रव्यादाश्च पृथग्विधा ।
शरैश्छिन्नानि गात्राणि विचरिष्यन्ति केशव ।
अद्य राधानुवस्त्वाहं समरे मधुसूदन ।
शिरश्छेत्स्यामि कर्णस्य मिषतां सर्वधन्विनाम् ।
अद्य तीक्ष्णैर्विपाठैश्च क्षुरैश्च मधुसूदन ।
रणे छेत्स्यामि गात्राणि राधेयस्य दुरात्मन ।
अद्य राजा महत्कृच्छ्रं संत्यक्ष्यति युधिष्ठिर ।
सताप मानस वीरश्चिरसंभृतमात्मन ।
अद्य केशव राधेयमहं हत्वा सयान्धवम् ।
नन्दयिष्यामि राजानं धर्मपुत्रं युधिष्ठिरम् ।
अद्याहमनुगान्कृष्ण कर्णस्य कृपणान्युधि ।
हन्ता ज्वलनसंकाशै शरै सर्पविषोपमै ।
अद्याहं हेमकवचैराबद्धमणिकुण्डलै ।
संस्तरिष्यामि गोविन्द वसुधां वसुधाधिप ।
अद्याभिमन्योः शत्रूणां सर्वेषां मधुसूदन ।
प्रमथिष्यामि गात्राणि शिरांसि च शितै शरै ।
अद्य निर्धार्तराष्ट्रां च भ्रात्रे दास्यामि मेदिनीम् ।
निरर्जुना वा पृथिवीं केशवानुचरिष्यसि ।

25

After 802*, T1 2 G M ins

अद्य राजा धर्मपुत्रो हतामित्रो भविष्यति ।
अद्य दुर्योधनो दीना श्रियं राज्यं च हास्यति ।
हते वैकर्तने कर्णे भीष्मे द्रोणे च संयुगे ।
कवरत्वद्बल कृष्ण प्रविष्टं सोऽस्यते तु यत् ।
अद्यप्रभृति राजानं धर्मशील युधिष्ठिरम् ।
अनुमोदन्तु सुहृदो ज्ञातपूर्वाश्च ब्राह्मणा ।
अद्य त निहत श्रुत्वा कर्णं वैकर्तनं मया ।

(for the prior half) M1 निहते च (for °तश्च) — (L. 8) M1 शोकमापन्ने G2 तदा (for तथा). — (L. 9) G1 प्रतिनिंदतु (for °नन्दन्तु) — (L 13) M नारसिंह वपु — (L. 16) T1.2 G1.2 M1 स्थान्धकान्, M2–4 सबान्धवान्

24

For the repetition in B2, cf 8 48 7 — (L. 1) B2 (first time).3 D2 6 T2 कृष्ण, B4 गहे, B3 राज्य, D4 वाद्य, D4 (marg ) राज्य, D3 राज्य (for राज्ये) Dn1 धृतराष्ट्र-, D3 नरेश्वरं — (L 2) B3 कृष्णानु- (for कर्णस्य) B2 (first time) चक्राङ्गा, Ca c चक्राङ्गा (as above) B4 पृथग्गना (for °विधा ) — (L. 3) Da1 D5 छन्नानि V1 B (B2 both times) Da1 Dn1 D1.4 3 T2 Ca. c विह(T2 °क्रि)रिष्यंति (for विच°). D5 देहव , T2 भूतले — (L 5) K4 छिरस्यामि, D5 छेत्स्यामि — (L 6) K2 कर्णैर् (for तीक्ष्णैर्) Ś1 विपाठैश्च, K3 विपाठैश्च, B1 °ठैश्च, Da1 °पाठैश्च, D2 °वैश्च (for °ठैश्च) B3 (both times) D5 क्षुरैर् (for क्षुरैश्च) — (L. 7) B2 (first time) रणे (for रणे) V1 B2 (both times) 3 Da1 D1 2 6 8 नेत्स्यामि (for छेत्स्यामि). — B1 om. lines 8–9 — (L. 8) D5 अन्द- (for अद्य). T2 च यद् (for महत्) B2 (first time) कृष्ण; Co कृच्छ्रं (as above) K4 संतिक्ष्यति, B2 (both times).3–4 D4 7 संत्यक्षति — (L. 9) B2 (first time) वीर, T3 चिर B3 (both times) D5 संभृतन्, Da1 D1.5 -संभृतन् (for -संभृ°). — (L. 10) D1 हत्वा दृष्ट्वा (for अहं हत्वा) — (L 11) Ś K1 2 4 धर्मनित्य, D5 °राज (for °पुत्र). — T2 om line 12 — (L. 12) Da1 D1.5 अन्वगान् (for अनुगान्) D3 कृपण, Co °णान् (as above). — (L. 13) T2 हत्वा (for हन्ता) B2 (first time) कुलन- (for ज्वलन-) T2 आशीविषोपमै (for सर्प°). — (L. 14) Dn1 D2 4 हेमनिष्कचैर् (D1 °कृतैर्) (for °कवचैर्) K3 आबद्ध-हेमकुण्डलै , B1 Dn1 D2.4 1 गाधपत्रैरनिष्कै (for the post half) — (L. 15) Da1 D1 5 संतरिष्यामि B4 transp गोविन्द and वसुधा — (L 16) D5 अभिमन्यो- T2 शूरस्य शत्रूणां (for शत्रूणा सर्वेषां) B2 (first time) lacuna for the post half K3 4 मधुसूदना (K4 °न ) — B2 (first time) om. lines 17—19 — (L 17) Ś K1.2 4 D2 गात्रेभ्य , T2 कायेभ्य (for गात्राणि) Ś K1 3 4 V1 Da.8 T2 निशितै (for च शितै ) — (L. 18) T2 निर्धार्तराष्ट्री Ś K2 B1.3 Da1 D1.5 6 T2 वा, K1 V1 वै (for च). K4 अद्य निर्धार्तराष्ट्रस्य (sic) D2 माधव (for मेदिनीम्) — (L. 19) Om in D2 D6 T2 निरर्जुना वा पृथिवी D6 अद्य (for अनु-) T2 केशवैषा भविष्यसि (for the post half)

25

(L. 1) T1 M सूर्यधृति , G1 धर्मधृति (for °पुत्रो) — (L 3) T1 M1 भीष्मद्रोणे (M1 °णौ) — (L. 4) T1 कतरस्, G1.2 M1 कतरं M2–4 सत् (for यत्). — (L. 5) G1 धर्मराज (for °शील) — (L. 7) M1 दृष्ट्वा (for हत्वा).

करोतु पटहोन्मिश्रं देवतास्थानपूजनम् ।
अद्य कृष्ण हते कर्णे कुरुता चिरसंभृतम् ।
याजनं वै महाबाहो देवतानां यथाविधि ।
अद्य स्वस्रा च कृष्णा च त्वरमाणे परस्परम् ।
सस्वजेता हृषीकेश संपूर्णेऽस्मिन्मनोरथे ।
अद्य त्वां पाण्डवो ज्येष्ठस्तथार्यश्च वृकोदर ।
उदीक्षेता हते कर्णे कृष्ण सौम्येन चक्षुषा ।
अभिवाद्य गुरूनद्य कनिष्ठैश्चाभिवादित ।
सस्वजानो ह्यहं दोर्भ्यां प्राप्स्यामि विपुलं यशः ।
अद्य कर्णे हते कृष्ण प्रशंसन्तोऽर्जुनं सुरा ।
त्रिदिवं यान्तु संहृष्टा सगताश्च तपोधना ।
अद्य लोकास्त्रयः कृष्ण जानन्तु मम पौरुषम् ।
दृष्ट्वा कर्णं हतं युद्धे द्वैरथे सव्यसाचिना ।

26

Ś K V1 B1-4 Da1 Dn1 D1-5 7 8 T2 Ca c.n ins after 8 54 28 B5 D6 after 832* :

महाद्विपाना सरलद्रुमोपमा
करा निकृत्ता प्रपतन्त्यमी क्षुरैः ।
किरीटिना तेन पुन ससादिन
शरैर्निकृत्ता कुलिशैरिवाद्रय ।
तथैव कृष्णस्य च पाञ्चजन्यं
महार्हमेतद्विजराजवर्णम् ।
कौन्तेय पश्योरसि कौस्तुभं च
जाज्वल्यमानं विजया स्रजं च ।
ध्रुवं रथाग्र्यं समुपैति पार्थो
विद्रावयन्सैन्यमिदं परेषाम् ।
सिताभ्रवर्णैरमितप्रयुक्तै
हयैर्महार्हैं रथिनां वरिष्ठ ।
रथान्हयान्पत्तिगणांश्च सायकै-
र्विदारितान्पश्य पतन्त्यमी यथा ।
तवानुजेनामरराजतेजसा
महावनानीव सुपर्णवायुना ।
चतु शतान्पश्य रथानिमान्हता
न्सवाजिसूतान्समरे किरीटिना ।
महेषुभि सप्त शतानि दन्तिनां
पदातिसादींश्च रथाननेकश ।

— (L. 8) G1 पटहोन्मिश्रा T1 G2 देवतास्थानपूजिनं, G1 °स्थनपूजनं (for the post half) — (L 9) M1 कृष्णा M2-4 कुरुवाच् T1 G2 चि(G2 ची)रसभृतां — (L 10) T1 धावनं, M याचन (for याजनं) T1 M2-4 यथा विधि — (L 11) T1 त्वं ही च (sic), G1 त्वयाथ — (L. 13) T2 G1 2 त्व G2 पाण्डवश्रेष्ठस् — (L 14) T1 उदीक्षतां — (L 15) G2 M1 कुरून् (for गुरून्) M1 कन्यसैश्च (for कनिष्ठैश्च). — (L. 16) G1 सस्वजे त्वाम्, G2 °जेन्यो हि (for °जानो हि). — (L. 18) M1 सहताश्च् — (19) G2 कृत्स्नं जानतु पौरुषं (for the post half)

26

B1 3 om lines 1-4, T2 reads the same after line 8 — (L. 1) K4 महाद्रुमाणां (for °द्विपानां) Da1 D1. 5 सबल- (for सरल ) T2 नागा गिरीणां सदृशा महाशा — (L. 2) T2 शरैर् (for करा) K4 निकृता , D1 विकृत्ता (for निकृत्ता ) D6 खुरैः ; T2 भृशं (for क्षुरैः ) — (L 3) B1 किरीटिन B2 om. तेन पुन Ś K2 ते च (for तेन) Ś1 K2 ससादिश (sic), Ś2 K4 Dn1 D6 8 समाहता (K4 °दिश, Dn1 °दिन , D6 °दिता D8 °दिन ) (for ससादिन ) K1 किरीटिना तेम पुर समादिश (sic), T2 किरीटिनातीव पुनस्तु कौरवा — (L 4) Ś K V1 B3 5 Da1 D1 5 6 8 T2 प्र( K8 D6 T2 वि)भिन्ना , D4 निकृता (for निकृत्ता ) K1 D8 कुशलैर्, D2 कुलिशा (for कुलिशैर्) — B5 D6 om lines 5-8 — (L. 5) B1 विक्रम्य (for कृष्णस्य). T2 कृष्णस्यैत पांचजन्यं च शख — (L 6) B2 महातमेत, D2 5 8 महार्हमेन ; T2 विराजमान (for महार्हमेतद्) Da1 D8 द्विजराजवर्णे, Dn1 °राधवर्ण Cc cites द्विजराज — (L. 7) T2 वार्ष्णेयस्य (for कौन्तेय पश्य) — (L 8) Ś1 K2 lacuna, Ś2 तथा लसति (for जाज्वल्यमान) Ś2 K8 D8 T2 Cc विजय (K8 D8 Cc °य-) T2 रथ, Cc स्रज (as above) — (L. 9) B2 यथाग्र्य (for र°) D2 समुपेत्य (for °पैति) — (L 10) T2 विभ्रासयन् (for विद्राव°) D8 सैन्यरथ परेषां — (L 11) Ca.c cite असित Ś K D2 8 रजतप्रयुक्तैर्, Da1 D1 5 असितप्रयुक्तैर्, T2 असितप्रयुक्तैर्, Cn असितप्रयुक्तैर् (as above) — (L. 12) D1 8 महार्हैं V1 D8 वरिष्ठैः (D8 °ष्ठ). — K2 lacuna for lines 13-15 — (L 13) Ś K1 3 4 D8 रथा हया (for रथान्हयान्) Ś K1 3 4 D1 पत्तिगणाश्च्, D8 °संघांश्च (for °गणांश्च) — (L 14) Ś K1. 3 4 D8 T2 विदारिता ; V1 विद्रावितान् (for विदारितान्) D8 transp पतन्त्यमी and यथा Ś2 तपत्यमी B8 क्षुरै , T2 रथा (for यथा). — (L. 15) Ś K1. 2 [अ]ग्रजेन (for [अ]नुजेन) D8 अमर तेजसा महा (sic), T2 अमरतुल्यवर्चसा (for °राजतेजसा). — (L. 16) K1 महाधनानि, Da1 °बलीनि; D6 °बलानि (for °वनानि) D8 यथा हि, Ca c सुपर्ण- (as above) — (L. 17) T1 गतागतान् (for चतुःशतान्) K4 रथोत्तमान्हतान्, B5 D6 T2 रथान्निपातितान् (for रथानिमान्हतान्) — T2 om line 18 — (L 18) Ś2 सर्वाजिनान् (for सवाजिसू°) — (L 19) B2 सप्तशतेन (for °शतानि) D8 राजमार्गे पुर सप्तशतानि सप्त दतिनां (corrupt) — (L. 20) B5 T2 पदातिसंघा(T2 °घां)श्च Ś K V1 B3 4 Da1 D1. 5 8 T2 हतान्; B1 D2 हया,

अयं समभ्येति तवान्तिकं बली
  निघ्नन्कुरूंश्चित्र इव प्रहोऽर्जुन ।
समृद्धकामोऽस्मि हतास्तवाहिता
  बलं तवायुश्च चिराय वर्धताम् ।

27

After 8 57.15, $D_2$ $T_{1.2}$ G M and Bom. ed. ins.

धनुर्ज्या चन्द्रताराकंपताका किङ्किणीयुता ।
पश्य कर्णार्जुनस्यैषा सौदामिन्यम्बरे यथा ।
एष ध्वजाग्रे पार्थस्य प्रेक्षमाण समन्तत ।
दृश्यते वानरो भीमो वीक्षतां भयवर्धन ।
एतच्चक्रं गदा शङ्खः शार्ङ्गं कृष्णस्य च प्रभो ।
दृश्यते पाण्डवरथे वाहयानस्य वाजिन ।
एतत्कूजति गाण्डीवं विकृष्टं सव्यसाचिना ।
एते हस्तवता मुक्ता घ्नन्त्यमित्राञ्छिता शरा ।
विशालायतताम्राक्षै पूर्णचन्द्रनिभाननै ।
एषा भू कीर्यते राज्ञा शिरोभिरपलायिनाम् ।
एते परिघसंकाशा पुण्यगन्धानुलेपना ।
उद्यता रणशौण्डानां पात्यन्ते सायुधा भुजा ।
निरस्तजिह्वानेत्रान्ता वाजिन सहसादिभि ।
पतिता पात्यमानाश्च क्षितौ क्षीणा विशेरते ।
एते पर्वतशृङ्गाणा तुल्या हैमवता गजा ।
सञ्छिन्नहस्ता पार्थेन प्रपतन्त्यद्रयो यथा ।
गन्धर्वनगराकारा रथा हतनरेश्वरा ।
विमानानीव पुण्यान्ते स्वर्गिणां निपतन्त्यमी ।
व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना ।
नानामृगसहस्राणां यूथं केसरिणा यथा ।

28

After 8 60.31, $D_6$ S ins.

आलोक्य तौ चैव परस्परं तत
  समं च शूरौ च ससारथी तदा ।
भीमोऽब्रवीद्याहि दु शासनाय
  दु शासनो याहि वृकोदराय ।
तयो रथौ सारथिभ्यां प्रचोदितौ
  समं रथौ तौ सहसा समीयतु ।
नानायुधौ चित्रपताकिनध्वजौ
  दिवीव पूर्वं बलशक्रयो रणे ।
भीम ।
दिष्ट्यासि दु शासन मय दृष्ट
  ऋणं प्रतीच्छेः सहवृद्धिमूलम् ।
चिरोदितं तं यन्मया ते समायां

$D_2$ महान् (for रथान्) — (L. 21) $K_3$ om. from तवान्तिक up to कामोऽस्मि in line 23 — (L. 22) $Ś_1$ $K_3$ कुरुश्चैत्र इव, $K_1$ °श्चैतु इव (sic), $K_4$ °श्चेत्र इव (sic), $Da_1$ $D_{1.2}$ हस्तश्चैत्र इव, $D_{2.3}$ कुरुन्केतुरिव, $T_2$ °श्चक्र इव (for कुरूंश्चित्र इव) — (L. 23) Ś $K_1$ समृद्धि- (for समृद्ध-). $T_2$ तवारयो (for °हिता) — (L. 24) $V_1$ तथा (for तव) Ś $K_{1.2.4}$ चिरं विवर्धतां (for चिराय वर्ध°)

27

(L. 1) $M_3$ damaged. $D_3$ $G_1$ $M_1$ धनुर्ज्यां Bom ed. चन्द्रतारका $D_3$ $M_1$ -पताकां $D_3$ $T_1$ $G_1$ $M_1$ किंकिणीयुतां — (L. 2) $M_3$ damaged. $G_{1.3}$ सौदामनी $M_1$ सौदामिन्देव चांबरे (for the post. half). — (L. 4) $D_3$ पश्यते (for दृश्यते). $D_3$ $M_1$ वीक्ष्यतां, $G_2$ प्रेक्षतां, $M_3$ विक्षतां, Bom. ed. भीरूणां (for वीक्षतां) — (L. 5) $D_3$ $G_1$ $M_1$ शखं $M_{2-4}$ शार्ङ्गं- $G_2$ शोभते, $M_1$ च प्रभो (for च प्रभो) — (L. 6) $T_1$ $M_{3.4}$ दृश्यते $T_1$ वाह्यमानस्य, $G_2$ वहमा° $G_2$ सादिन (for वाजिन) — (L. 7) $D_3$ विसृष्ट — (L. 8) $G_1$ om. from the post. half up to line 16 $T_2$ $G_3$ हति $M_1$ शत्रून् (for [अ]मित्रान्) $T_1$ शरै — (L. 9) $G_3$ -ताम्राक्ष and -निभानन $M_1$ निकृत्ते क्रूरकर्मणा (for the post. half) — (L. 10) $G_3$ भाति मही (for भू कीर्यते). — (L. 11) $G_3$ -संघाशा $M_1$ एते ह्युपरिघाकारा (for the prior half) — (L. 12) $D_3$ उद्धता, $T_1$ उद्यतां, $T_2$ $G_3$ उद्धता $D_3$ रणशूराणां $M_1$ उपशायुतशौंडीरा (for the prior half) $T_2$ सायका भुजान् (for सायुधा भुजा) — (L. 14) $T_2$ $G_3$ पातिता- $G_2$ [अ]न्न-(for वि-) — (L. 16) $D_3$ संछिन्नभिन्ना, $T_2$ $G_3$ °कुम्भा; $M_{2-4}$ °गात्रा- $M_4$ प्रतपति — (L. 17) $T_1$ रथनागा; $G_1$ राधाश्वानि (sic), $G_3$ रथागत- (for रथा हत-). $G_1$ हतेश्वरा (for -नरे°). — (L. 18) $D_3$ विमाना इव; Bom ed. °नानिव $M_1$ पुण्यानां (for पुण्यान्ते). $M_1$ प्रणतति (for निप°) — (L. 19) $D_3$ त्वस्य (for पश्य). Bom ed. परसैन्य (for पश्य सैन्य). — (L. 20) $D_3$ $T_2$ $G_{1.3}$ केसरिणां — After the above, $D_3$ $T_{1.2}$ G M repeat 8 57.15 followed by 866*

28

(L. 1) $D_6$ तावेव; $T_2$ तौ तत्र (for तौ चैव). — (L. 2) $T_1$ ससारथि, $M_{2-4}$ स्वसारथी — (L. 3) $D_6$ सूत समीपे (for दुःशासनाय) — (L. 4) $M_1$ reads [अ]ब्रवीत् after दुःशासनो — (L. 5) $D_6$ सारथिसंप्रचोदितौ — (L. 6) $D_6$ $G_1$ रणे रथौ, $T_1$ महारथौ, $G_2$ समौ रथौ (for सम रथौ) $T_1$ $M_{1.2.4}$ समेयतु — (L. 7) $M_1$ नागायुधौ $G_2$ शस्त्र- (for चित्र-) $T_{1.2}$ $G_{2.3}$ -पताकिनौ, $M_{2-4}$ -पताकिता ($M_4$ °त) $D_6$ $T_2$ $G_1$ नानाविधच्छत्रपताकिनौ ($T_2$ °कस-)ध्वजौ — (L. 8) $G_{1.3}$ बलिशक्रयो, $M_3$ बलवृत्रयो — (L. 9) $D_6$ हि, $T_2$ स, $G_2$ [अ]य (for [अ]सि). $D_6$ दुःशासनम् $T_1$ चाद्य $D_6$ $T_2$ दृष्टम् — (L. 10) $T_{1.2}$ $G_{1.2}$ रण (for ऋण) $G_1$ प्रतिज्ञो (for प्रतीच्छे). $T_1$ -चक्रमूलं (for -वृद्धि°). $D_3$ अमर्षण प्रतीच्छेत्सहवृद्धमूलं — (L. 11) $D_6$ $T_2$ $G_1$ M चिरोषितं (for °दित) — (L. 12)

30

G1 2 M ins after 8 61 2 [a5] T1 after line 8 of App I (No 29), T2 ins lines 1–4 after line 8 of App I (No 29 ), and lines 17–24 after line 16 of App I (No 29 ) G3 after 929*

स कार्मुकं गृह्य तु भारसाधनं
भीमस्तदा राजपुत्रं ह्यविध्यत् ।
पञ्चाशता मार्गणानां स्तनान्तरे
तोत्रैर्यथातीव भिनद्धि पेन्द्रम् ।
ततोऽतिविद्धो विरथं महात्मा
दु शासनो भीमसेनं चकार ।
निहत्य सूतं चतुरोऽस्य वाहा-
ञ्छित्त्वा रथेषां पुनरेव चाक्षिपत् ।
ततः क्षितिस्थो ह्यवरुह्य यानाद्
वृकोदरो गदया तस्य वाहान् ।
यमक्षयं प्रेषयित्वा महात्मा
रथं समाकर्षत राजपुत्रो ।
तस्मादवप्लुत्य रथात्समन्तं
दु शासनस्तोमरमुग्रवेगम् ।
स तेन विद्धो हृदि चाप्रमेयो
गदां तस्मै विससर्जाप्रमेयाम् ।
ततः क्रोधाद्भीमसेनः कृतानि
सर्वाणि दु खान्यनुसंस्मरंश्च ।
संस्मृत्य संस्मृत्य तथा प्रतिज्ञा-
मुग्रामथो राजपुत्रो न्यषीदत् ।
मचिन्त्यन्नोपमतीव कोपा-
त्त्रयोदशाब्दं पुरुषप्रवीर ।
प्रगृह्य वज्राशनितुल्यवेगां
गदां करेणाथ वृकोदरो रणे ।
निपातयित्वा पृथिवीतले भृशं
संताडयामास बली वृकोदर ।
अतीव संताडितभिन्नगात्रो
दु शासनो वै निपपात भूमौ ।
आक्रम्य कण्ठे युधि राजपुत्रं
संरक्तनेत्रो ह्यब्रवीद्धार्तराष्ट्रम् ।
तद्ब्रूहि किं त्वं परिमार्गमाणो
ह्यस्मान्पराभूय इहागतान्पुन ।
तदिदमद्य भृशमस्मृत मे
चिरार्जितं रोषमतिप्रदीप्तम् ।
स तु प्रयास्ये तव कोष्ठभाजना-
दित्यब्रवीद्भीमसेनस्तरस्वी ।
दु शासनं कण्ठदेशे प्रसह्य-
स्ततः क्रूरं भीमसेनश्चकार ।
तं व्यसयित्वा सहसा ससार
यस्मादसौ धार्तराष्ट्रस्तरस्वी ।
सपत्नतां दर्शयन्धार्तराष्ट्रे
भीमोऽभिदुद्राव सुतं त्वदीयम् ।
मृगं मुहु सिंहशिशुर्यथा वने

30

(L 2) T1 विविध्य, G3 न विध्यत् (for ह्यवि°) — After line 2, G3 ins

विचिक्षिपे तां यमदण्डसंनिभां
भीमो हि भीमां ज्वलितामिवोल्कान् ।

— After the above, G3 reads lines 23–24 — (L 4) T1 G3 इवाग्निप्रतिम, G2 इवाग्निप्रतिमैर्, M यथाग्नि प्र(M1 °दीप्त)भिन्नं (for °तीव भिनद्) — T2 om lines 5–16 — (L 5) M1.3 4 ततो विद्धो T1 G2 3 ततो विद्धो (T1 °द्ध) विरथं त महात्मा —(L 7) T1 G1 संरब्धे, G3 संचे (for सूतं). T1 G1.2 हयांश्च (for ऽस्य वाहान्) — (L 8) M1 छित्वा (for छित्त्वा) G1 M1 रथेषां T1 चाच्छिनत् (for चाक्षिपत्) — (L 9) T1 G2 3 क्षितौ तु (T1 त) (for क्षितिस्थो). M1 ह्यवरुह्य (for °रुह्य) G3 वाहाद् (for यानाद्) —(L 15) M1 विद्धो T1 हृदस; M2 4 स्तनि (for हृदि) —(L 16) T1 M1 अस्मै (for तस्मै) M1 प्रससर्ज (for विस°) — T2 reads lines 17–24 after line 16 of App I (No 19) — (L 18) T1 च, M1 अनि- (for अनु ) — (L 20) M असौ (for अथो) T1 M1 राजपुत्रे G2 3 न्यषीदत् (for न्यषी°) — (L 21) M3 partly damaged. T1 संचिन्त्य त, G2 3 °चिन्तिन, M1.2 4 तत्संचित (for सचिन्तयन्) G2 3 वेगात् (for कोपात्) — T1 G2 M1 om line 23 G3 reads lines 23–24 after the insertion following line 2 — After line 23, M2–4 ins

समापतन्तीं ज्वलितामिवोल्कान् ।

— (L. 24) G2 3 शूरेण, M1 परेण (for करेण) — T2 om lines 25–53 — After line 25, T1 G2 3 ins

आदाय दु शासनमुग्रवेगम् ।

— (L. 26) M1 स ताडयामास — (L. 27) T1 संताडनभिन्नगात्रो, G1 संताडितभिन्नगात्रैर् — After line 28, M2–4 read lines 42–47 —(L 30) G1 युधि, G3 M2–4 अब्रवीद् (for ह्यब्र°) G2 संरक्तो ** अब्रवीद् — (L 31) T1 M1 यद् (for तद्) M2–4 यत्त्व (for किं त्व) G1 परिमार्गमाणो — (L. 32) G1 M om. हि T1 समागतान्, G2 3 इहागत (for °गतान्) — (L. 33) T1 तदेतदद्य, G अ(G3 आ)दीपयत्तद् T1 भृशसंमित, G1 3 °दीपितं, G2 °पीडित (for °संभृत) — (L. 34) M2–4 अदीपयत्ते (for अतिप्रदीप्तम्) — (L. 35) T1 कुगमाजनाद् (for कोष्ठ°) — T1 M om lines 36–37 and 39–40 G transp lines 41 and 42 — (L. 41) G1.2 सपत्नतान् — (L. 42) T1 M2 4 विदुद्राव, G1 M1 [ऽ]भिदु° (for ऽभिदु°) — (L 43) M1 तथा, M2–4 यथा (for मुहु ).

तथाश्वभिद्रुत्य महाबलं बली ।
निगृह्य चैनं परमेण कर्मणा
उत्क्षिप्य चोत्क्षिप्य च तूर्णमेनम् ।
भूमौ तदा निष्पिपेषाथ वीर
असिं विकोशं विमलं चकार ।
कण्ठे समाक्रम्य च वेपमानं
कृत्वा तु रूपं परमं सुघोरम् ।
कालान्तकाभ्यां प्रतिम तदानीं
विदार्य वक्षः स महारयस्य ।
दुःशासनस्य रिपुशासनस्य

31

After 8. 61. 5ab, K4 V1 B D (except D2 8) ins.*

तस्मिन्सुघोरे तुमुले वर्तमाने
प्रधानभूयिष्ठतरे समन्तात् ।
दुःशासनं तत्र समीक्ष्य राज-
न्भीमो महाबाहुरचिन्त्यकर्मा ।
स्मृत्वाथ केशग्रहणं च देव्या
वस्त्रापहारं च रजस्वलायाः ।
अनागसो भर्तृपराङ्मुखाया
दुःखानि दत्तान्यपि विप्रचिन्त्य ।
जज्वाल क्रोधामर्षेण भीम
आज्यप्रसिक्तो हि यथा हुताशः ।
तत्राह कर्णं च सुयोधनं च
कृपं द्रौणिं कृतवर्माणमेव ।
निहन्मि दुःशासनमद्य पापं
संरक्ष्यतामद्य समस्तयोधाः ।
इत्येवमुक्त्वा सहसाभ्यधाव
न्निहन्तुकामोऽतिबलस्तरस्वी ।
तथा तु विक्रम्य रणे वृकोदरो
महागजं केसरिणो यथैव ।
निगृह्य दुःशासनमेकवीरः
सुयोधनस्याधिरथेः समक्षम् ।

32

After 8. 61. 6ab, K4 D2 (lines 9–10 only) T2 ins.*

ये राजसूयावभृथे पवित्रा
जाताः कचा याज्ञसेन्या दुरात्मन् ।
ते पाणिना कतरेणावकृष्टा
प्रब्रूहि त्वां पृच्छति भीमसेनः ।
उक्तस्त्वयाजौ स तदा सरोषं
जगाद भीमं परिवृत्य नेत्रे ।

---

T1 महावने (for यथा वने) — (L. 44) T1 तदाभ्यभिद्रुत्य; M1 तम*भि°, M2–4 तमप्यभि° (for तथाश्वभि°) G1 स (for बली) — (L. 46) T1 चोत्क्षिप्य, G3 ह्युत्क्षिप्य (for उत्क्षिप्य). M1 मोहाक्राम्य, M2–4 चोत्क्राम्य (for चोत्क्षिप्य) — (L. 47) G [आ]शु (for [अ]थ) G3 वीरं — (L. 50) G1 [अ]नुरूप, M1 स्वरूप (for तु रूप) M सुरौद्रं (for सुघोरम्). T1 कृत्वा रूप परम वै सुघोरं — (L. 51) T1 प्रतिमस् — (L. 53) M रिपुनाशनस्य

31

(L. 1) K4 V1 B3.5 Da1 D3.4.6 घोरे (for सुघोरे) K4 प्राधान (for प्रधान-) — (L. 5) K4 V1 B (except B1) Da1 D1.2.5.6 च, D7 स (for [अ]थ) K4 प्रियाया (for च देव्या) — (L. 8) K4 सम्प्रार्थित्य (for विप्र°) — After line 8, D6 ins.

संस्मृत्य संस्मृत्य तथा प्रतिज्ञा-
मुमामथो राजपुत्रो न्यषीदत् ।
ततः स्थित रोषमतीव कोपा-
त्त्रयोदशाब्दं पुरुषप्रवीर ।
प्रभद्रकान्सृञ्जयसोमकांश्च
कारूषकाशीश्वरमद्रकांश्च ।
पाण्डुप्रवीरानवदत्कुरूंश्च
दुःशासनं रक्षथ मद्गृहीतम् ।

— D6 om. lines 9–10. — (L. 9) K4 क्रोधामर्षिणे, B1 क्रोधावमर्षेण, B3.5 कोपामर्षेण (for क्रोधा°) — (L. 10) V1 Da1 D1.5 आज्यप्रसिक्तेन (V1 °थ), B2 प्राज्यप्रसिक्तो हि (for आज्यप्र°) V1 हुताशन — (L. 12) V1 B3 कृपं च (for कृपं) — (L. 14) K4 V1 B1.2 Dn1 D2.6 संरक्ष(V1 °क्ष्य)ताम् Da1 D1.5 शक्तृ(Da1 °क्त्यू)द्दियोधा (sic) (for समस्त°) — After line 14, D4 (marg.) ins.

स क्षत्रियः कोऽपि भवेत्पराक्रमी
यो मोचयेदेनमसह्यविक्रमात् ।
तदाह पार्थोऽपि रथाङ्गपाणि
किं मारुतिर्वक्ष्यते वासुदेव ।
अथाह कृष्णोऽपि धनंजयं स्वय-
न्न वायुपुत्रः शिवरूप एव ।

while D6 ins. after line 14

तत्राह कृष्णं च धनंजयं च
शिखण्डिनं धृष्टद्युम्नं यमौ च ।
पाञ्चालमत्स्यांश्च सकेकयांश्च
दुःशासनं रक्षथ मद्गृहीतम् ।

— (L. 16) V1 [ऽ]तिबली; Da D1.5 °बल (for °बलस्). — (L. 18) B1.4 महागजान् B2 Dn1 केसरिको V1 महागज सिंह इवातिदृप्तः; B3 महागजं केशरीवोग्रवेग — (L. 19) B2 एकवीर

32

(L. 1) K4 यो (for ये) T2 पवित्रिता — (L. 4) T2 स ब्रूहि (for प्रब्रूहि) — (L. 5) K4 उक्तं T2 सततं (for स तदा) — (L. 6) T2 जगाद नेत्रे परिवृत्य भीमः. — With

अयं करिकराकारः पीनस्तनविमर्दनः ।
गोसहस्रप्रदाता च क्षत्रियान्तकरः करः ।
अनेन याज्ञसेन्या मे भीम केशा विकर्षिताः ।
पश्यतां कुरुमुख्यानां युष्माकं च सभासदाम् ।
एवं स्वमौ राजसुतं निशम्य
भुवन्तमाजौ विनिपीड्य वक्षः ।
भीमो बलाद्बाहुमुद्गृह्य दोर्भ्यां-
मुच्चैर्ननादाय समस्तयोधान् ।
उवाच यस्यास्ति बलं कुलं च
रक्षत्वसौ मेऽद्य निरस्तबाहुः ।
दुःशासनं जीवितमुत्सृजन्त-
माक्षिप्य योवाच्चरसा महाबलम् ।
क्रुद्धो रणेऽस्थीव करं करेण
उत्पाट्य वीरः सहसैव राजन् ।
दुःशासनं तेन तु वीरमध्ये
जघान वज्राशनिसंनिभेन ।

33

N ins. after 8 61 10 T2 ins after 952*

तस्मिन्कृते भीमसेनेन रूपे
दृष्ट्वा च तच्छोणितं पीयमानम् ।
सप्राद्रवच्चित्रसेनेन सार्धं
भीमं रक्षो भाषमाणा भयार्ताः ।
युधामन्युः प्रद्रुतं चित्रसेनं
महानीकः साम्ययाद्राजपुत्रः ।
विव्याध चैनं निशितैः पृषत्कै-
र्व्यपेतभीः सप्तभिराशुमुक्तैः ।
पदाक्रान्तः सर्पवल्लेलिहानो
महोरगः क्रोधविषं सिसृक्षुः ।
निवृत्य पाञ्चालजमभ्यविध्य-
त्रिभिः शरैः सारथिं चाप्यविध्यत् ।
ततः सुपुङ्खेन सुपत्रितेन
सुसंशिताग्रेण शरेण शूरः ।
आकर्णमुक्तेन समाहितेन
युधामन्युस्तस्य शिरो जहार ।
विदार्य वक्षः स महारथस्य
दुःशासनस्य ह्यविशासनस्य ।

[With lines 5–16 in the above substitution, cf. lines 42–53 of App I (No. 30)]

lines 7–8, cf. lines 3–4 of 935*. — (L. 9) K4 च (for मे) K4 अत्र (for वि) — (L. 10) K4 मतां तदा (for सभासदाम्). — After line 10, K4 ins

मनोऽस्मि चैवमनेन सर्वं
कृतं मया यन्वदनेव कृत्स्नम् ।
सत्यं प्रतिज्ञां कुरु ना निरर्थां
मुजातिजाता न वृथा वदन्ति ।
अन्यत्तयोः रुधिरं पिबामि
पिबन्तु ते श्वादिखगाः श्रृगाला ।
त्वं चैवमेतां तु समानभूतो
मन्युर्न मे त्वस्ति कृताकृतस्य ।

— (L 13) Bomb. ed. स प्रतिगृह्य (for बाहुमुद्गृह्य). — For lines 15–22, T2 subst :

एवं ब्रुवाणस्तु भीमसेन
उत्पाट्यमानं भुजं महात्मा ।
ततः स रावन्नमतीव रुष्ट
संताड्यमानं भुजेन तेन ।
भीमोऽपि दुद्राव द्रुतं द्वितीयं
मृगं यथा सिंहशिशुर्वनान्ते ।
तमभ्यभिद्रुत्य महाबलं बली
निगृह्य चैनं परमेण कर्मणा ।
उत्क्षिप्य उद्भ्राम्य च तूर्णमेनं
भूमौ तथा निष्पिपेषाथ वीरः ।
असिं विकोशं विमलं चकार
कण्ठे समाक्रम्य च वेपमानम् ।
कृत्वा तु रूपं परमं सुरौद्रं
कालान्तकाभ्यां सदृशं तदानीम् ।

33

(L. 1) K3 भीमसेनस्य (for °सेनेन) K3 V1 रूप — (L. 2) B2 om च V1 B3–5 Dn1 D2–4.6.7 जनाः; T2 सेना (for च तत्) — (L. 3) T2 त प्राद्रवच् (for संप्राद्रवत्). — (L. 4) T2 भीम (for रक्षो) K3 भाष्यमाणा — (L. 5) B2 स्वपानन्युः. B3 प्रद्रुवाद् — (L. 6) K3 B5 D1 6 महानीकस्तु (K3 °स), V1 B1–4 Da1 Dn1 D2–5.7 सहानीकस्तु, D3 T2 सहानीक तु (for महानीकं स). — (L. 7) Ś1 निशतै , K3 निषितै Ś1 K3 पृषत्कैः, K4 पृषत्कैः. — (L. 8) Ś1 K4 व्यपीतभीः. B2 मुक्ते , B3 °नैः., D4 -युक्तैः (for -मुक्तैः). — (L. 9) K3 पदाक्रांतस्य इव, V1 पदाक्रांतो भोग इव; B1.3–5 Dn1 D2.4 6 7 T2 सं(B2 आ)क्रांतभोग इव (for पदाक्रान्तः सर्पवत्) B2 सर्प इव (for सर्पवत्) — (L. 10) B2 D2 मुमुक्षु (for सिसृक्षु) — (L. 11) Ś1 K1.2 विवृत्य (for निवृत्य) Some MSS पचाल°. Ś1 K4 B2 पां(Ś1 प)चालमथ, K3 पांचालजगस्य (sic) — (L. 12) Ś1 K2.4 चाभ्यविध्यत्, K1 चास्य विध्यत्, V1 B (except B5) D (except D2 3) T2 अ(T2 चा)स्य पत्रिं (for चाप्यविध्यत्) — After line 12 Dn1 reads from 8 61 17 up to पतै समे in 8 62.3* —(L. 13) K1 om , V1 B1.3 Dn1 D1.2 6.7 सुपत्रितेन, D3 सुपुत्रितेन — (L 14) D6 सरांशिताग्रेण (sic) (for सुसंशि°) T2 वीरः (for शूरः) — (L. 15) K3 आकर्णपूर्णेन (for °मुक्तेन) — (L. 17) K3 विनिहते (for हते भ्रातरि).

तस्मिन्हते भ्रातरि चित्रसेने
क्रुद्धः कर्णः पौरुषं दर्शयान ।
दुद्राव तत्पाण्डवानामनीकं
प्रत्युद्यातो नकुलेनामितौजा ।
भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणम् ।
पूरयित्वाञ्जलिं भूयो रुधिरस्योग्रनिस्वन ।

34

After 8 62 31, N T1 Ca o ins

तत क्रुद्धो वृषसेनो महात्मा
ववर्ष तावितुजालेन वीर ।
महारथाविकरथे समेतौ
शरैः प्रभिन्दन्निव पाण्डवेयौ ।
तस्मिन्रथे निहते पाण्डवस्य
क्षिप्रं च खड्गे विशिखैर्निकृत्ते ।
भीमार्जुनौ वृषसेनाय क्रुद्धौ
ववर्षतु शरवर्षं सुघोरम् ।
अथाब्रवीन्मारुति फल्गुन तु
पश्यस्वैन नकुलं पीडयन्तम् ।

अथ च नो बाधते कर्णपुत्र-
स्तस्माद्भवान्प्रत्युपयातु कार्ष्णिम् ।
स तद्विशम्यैव वच किरीटी
रथ समासाद्य वृकोदरस्य ।
कपिध्वज केशवसंगृहीतं
प्रैषीदुग्रो वृषसेनाय वाहम् ।

35

After 8 62 59ab, K4 Dn1 D4 (marg) c–8 ins

मुमोच तूर्णं विशिखान्महात्मा
वधे धृत कर्णसुतस्य संख्ये ।
आरक्तनेत्रोऽन्तकशत्रुहन्ता
उवाच कर्णं भृशमुत्स्मयंस्तदा ।
दुर्योधन द्रौणिमुखांश्च सर्वा-
नह रणे वृषसेन तमुग्रम् ।
स पश्यत कर्ण तवाद्य संख्ये
नयामि लोकं निशितै पृषत्कै ।
यमस्य यावद्धि जना वदन्ति

— (L. 18) K3 क्रुद्धस्तु कर्ण S2 दर्शयाना — (L 19) B2 5 विद्रानयत, B4 Dn1 D2 6 7 T3 व्यद्रावय(D6 °व त)त् (for दुद्राव तत्) B2 प्रवीर (for अनीक) — (L. 20) K3 प्रत्युद्ययौ, B4 D3 4 7 °याते B2 नकुलोमामितौजा , D6 फाल्गुनाया°, D7 नकुलेशा°; T2 प्रत्यनीक महौजा — T1 om lines 21–22 — (L. 21) D2 भीमोपि संख्ये हत्वैव (for the prior half) B1 D3 अमर्षण — (L 22) B1 Da1 D1.3 5 7 भूमो (for भूयो) Some MSS. -निस्वन D2 रुधिरोग्रेण वर्चसा (for the post. half).

34

(L. 2) Ś2 इष्वजालेन (sic) (for इषु°) D2 वीरौ, D6 वीरा (for वीर) — (L. 3) B3 महारथावेकरथेन वीरा (sic) — (L 4) K3 ° स- (for प्र-) — T2 ins after line 4 Dn1 after line 6

अन्ये च संहत्य कुरुप्रवीरा-
स्ततो न्यघ्नञ्शरवर्षैरुपेत्य ।
तौ पाण्डवेयौ परित समन्ता-
त्संहूयमानाविव हव्यवाहौ ।

[(L 1) T1 सगत्य (for संहत्य) — (L 2) Dn1 निघ्नन् Dn1 उपेतौ — (L 3) Dn1 समतान्, Bom ed समेतान् — (L 4) T2 श्रद्धेयमाना इव हव्यवाहे ]

— T1 om lines 5–14 — (L 5) B1 om D8 रणे (for रथे) Ś1 निहिते, V1 B Da1 D1–5 7 विह(D2 °हि)ते — (L 6) B5 खड्गैर् (for खड्गे) D8 निशितैर् (for विशिखैर्) K3 निकृत्ये, K4 निकृते, B2 निकृत्य (for निकृत्ते) — (L. 7) Ś2 वृषसेनश्च (for °नाय) — (L 8) K3 बाणवर्षं (for शर°) — (L 9) K1 दारुमि (for मारुति) Some MSS फाल्गुन Ś1 K1 2 4 B2 त (for तु) — (L 10) K3 पश्यन्, B2 आसाद्य (for पश्यस्व) Ś K1–3 [इ]मि, K4 [इ]म (for [ए]न) Ś1 K1–3 D2 पीडयति, V1 B2 3.5 Dn1 पीड्यमान (for पीडयन्तम्) — (L. 11) V1 B1–3 धावति (for बाधते) — (L. 12) Ś K V1 D8 कर्णं, Da1 D5 बाणि (for कार्ष्णिम्) — B5 reads lines 13–14 twice — (L 13) B2 om, D2 [अ]थ (for [ए]व) — (L 14) Ś1 रथा, D2 वलं, D8 सव्य (for रथ) Cc cites समासाद्य (as above) — Dn1 ins after line 14 T1 after the insertion following line 4

अथाब्रवीन्नकुलो वीक्ष्य वीर-
मुपागत शातय शीघ्रमेनम् ।
इत्येवमुक्त सहसा किरीटी
आभ्रा समक्ष नकुलेन संख्ये ।

[(L. 1) T2 [अ]र्जुन (for[अ]ब्रवीन्) — (L. 2) T2 उपागत ]

— (L. 16) B (except B2) Dn1 D2 3 7 8 T2 उदग्रो (for उग्रो) Dn1 T2 वृषसेनस्य (for °नाय) V1 B3.5 वाहान्, Ca वाहन् (as above) — Colophon om. in Ś K V1 B Da1 D1 2 4–8 — *Adhy name* Dn1 वृषसेनयुद्ध नकुलपराजय°, D8 T2 वृषसेननकुलयुद्ध — *Adhy no* Dn1 84, T2 90

35

With lines 1–2, cf 8 62 59cd D6 8 om lines 1–3 K4 D4 om lines 1–2 — (L 6) D6 अय (for अह) D6 7 om तम् K4 D8 अय रणेह वृषसेनमुग्र — (L. 8) D6.8 नुपुरे (for पृषत्कै°) — (L 9) K4 Dn1 D4 जन च तावद्

भवद्भिः सर्वैर्मम सूनुर्हतोऽसौ ।
एको रथो मद्विहीनस्तरस्वी
मह हनिष्ये भवतां समक्षम् ।
संरक्ष्यतां रथसंस्थाः सुतोऽय-
मद्य हनिष्ये वृषसेनमेनम् ।
पश्चाद्वधिष्ये त्वामपि संप्रमूढ-
मद्य हनिष्येऽर्जुन आजिमध्ये ।
तमद्य मूलं कलहस्य संख्ये
दुर्योधनापाश्रयजातदर्पम् ।
त्वामद्य हन्तास्मि रणे प्रसह्य
अस्यैव हन्ता युधि भीमसेनः ।
दुर्योधनस्याधमपूरुषस्य
यस्यानयादेष महान्क्षयोऽभवत् ।
स एवमुक्त्वा विनिसृज्य चाप
लक्ष्यं हि कृत्वा वृषसेनमाजौ ।

## 36

K4 V1 B Da1 Dn1 D1 8-7 Co ins. after 8 62 T2 after 8 63 2

संजय ।

तमायान्तमभिप्रेक्ष्य वेलोद्धृत्तमिवार्णवम् ।
गर्जन्तं सुमहाकायं दुर्निवारं सुरैरपि ।
अर्जुनं प्राह दाशार्हः प्रहस्य पुरुषर्षभः ।
अय स रथ आयाति श्वेताश्वः शल्यसारथिः ।
येन ते सह योद्धव्यं स्थिरो भव धनंजय ।
पश्य चैनं समायुक्तं रथं कर्णस्य पाण्डव ।
श्वेतवाजिसमायुक्तं युक्तं राधासुतेन च ।
नानापताकाकलिलं किङ्किणीजालमालिनम् ।
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः ।
ध्वजं च पश्य कर्णस्य नागकक्षं महात्मनः ।
आखण्डलधनुःप्रख्यमुल्लिखन्तमिवाम्बरम् ।
पश्य कर्णं समायान्तं धार्तराष्ट्रप्रियैषिणम् ।
शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम् ।
एष मद्रेश्वरो राजा रथाग्रे पर्यवस्थितः ।
नियच्छति हयानस्य राधेयस्यामितौजसः ।
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दं च दारुणम् ।
सिंहनादांश्च विविधाञ्शृणु पाण्डव सर्वशः ।
अन्तर्धाय महाशब्दान्कर्णेनामिततेजसा ।
दोधूयमानस्य भृशं धनुषः शृणु निस्वनम् ।
एते दीर्यन्ति सगणाः पाञ्चालानां महारथाः ।
दृष्ट्वा केसरिणं क्रुद्धं मृगा इव महावने ।
सर्वयत्नेन कौन्तेय हन्तुमर्हसि सूतजम् ।
न हि कर्णशरानन्यः सोढुमुत्सहतेऽनघ ।
सदेवासुरगन्धर्वांस्त्रीँल्लोकान्सचराचरान् ।
त्वं हि जेतुं रणे शक्तस्तथैव विदितं मम ।
भीममुग्रं महादेवं त्र्यक्षं शर्वं कपर्दिनम् ।
न शक्ता द्रष्टुमीशानं किं पुनर्योधितुं प्रभुम् ।
त्वया साक्षान्महादेवः सर्वभूतशिवः शिवः ।

(for यमस्य यावद्) K4 वितना (for हि जना) D8 यमस्य पुर्यामनृषा वदामि — (L. 10) Dn1 सर्वैर्भवद्भिर् (by transp.) — (L. 12) D8 अह वीराणां भवता वै समक्ष — (L. 13) D8 रथमुख्यै (for °संस्था°) D8 सरक्षतां रथसंस्थ सुतोय — (L. 14) D8 आदौ (for अह) D8 वधिष्ये (for हनिष्ये) Dn1 उग्र (for एनम्) — D8 om. lines 16-17 — (L. 17) D4 त्वम्, D8 त्वाम् (for तम्) — (L. 18) K4 D7 दुर्योधनापात्रजजातदर्पं, D8 दुर्योधनोपाश्रय° — D6 om. line 19 — (L. 20) D6 असौ च (for अस्यैव) — D6 8 om. line 22 — (L. 22) K4 Dn1 D4 (damaged) 7 [ऽ]भूत् (for ऽभवत्) — (L. 23) K4 मुक्तायिनिसृज्य (sic), D6 च विकृष्य (for विनिसृज्य) — (L. 24) K4 D8 लक्ष्

## 36

T2 om. the ref. — (L. 1) B2 वातोद्धृत्तम्, Da1 वेलो द्धृतम्, Dn1 °द्धृत्यम्, T2 वलोद्धृत्तम् (for वेलो°) — (L. 2) D6 दुर्निवार्यं (for °वारं) — (L. 3) Da1 D1 4 5 पुरुषर्षभ — (L. 5) B1 तेन (for येन) B5 [अ]द्य (for ते) Dn1 D1 धनंजयः — (L. 6) B5 चैव (for चैन) V1 B1 समास्थात, B2 °यांत (for °युक्त) V1 B1 2 om. (hapl.) the post. half, and the prior half of line 7 B1 पाडव, Dn1 °व° — (L. 7) K4 श्वेताश्ववाजिसंयुक्त (for the prior half) — (L. 8) Dn1 नानापताक D6 -सहित, T2 -कलित (for °ल) Dn1 -जालमालिनी, T2 °मालिक — B4 om. lines 9-12 — (L. 9) B2 ह्यमानम् (sic), D1 उह्यमानाम्, T2 कह्यमानम् B6 T2 पांडरैर् — (L. 10) Da1 D1 5 विजय पश्य, T2 ध्वजोय तस्य (for ध्वज च पश्य) B2 कौंतेय; D6 चायांत (for कर्णस्य) D6 om. (? hapl.) from the post. half up to the prior half of line 12 B2 नागकक्षा, T2 °कक्ष्यो — (L. 12) K4 कर्ण — T2 om. line 15 — (L. 15) D6 [अ]मितौजसं — (L. 16) B1 पृथग् (for शृणु) — (L. 17) Da1 D1.5 शूर (for शृणु) Dn1 T2 सर्वत (for °श°) — (L. 18) K4 महाशब्दा — (L. 19) Some MSS नि:स्वन, K4 D8 निःस्व(D8 °न्व)न — (L. 20) Dn1 दीर्यते, D3 दार्यंते Some MSS पचालाना — (L. 21) B1 3.6 D3 केशरिण T2 युद्धे (for क्रुद्ध) D1 महार्णवे (for °वने) — (L. 22) T2 सर्वोपायेन (for सर्वयत्नेन) — (L. 23) Dn1 नर (for ऽनघ) — (L. 24) K4 गधर्वास् — (L. 25) D6 मया, T2 समे (for मम) — (L. 26) B5 Da1 Dn1 D1 5 T2 महात्मान (for °देव) K4 V1 B1 Da1 D1 4 5 सर्वे (K4 Da1 D1 °र्वं-) — (L. 27) Da1 D1.5 विभु (for प्रभुम्) — (L. 28) K4 शर्व-

38

After 8 64. 24ᵃᵇ, T1 2 G M ins

वृद्ध पितरमालोक्य गान्धारीं च यशस्विनीम् ।
कृपालुर्धर्मराजो हि याचित शममेष्यति ।
यथोचितं च वै राज्यमनुज्ञास्यति ते प्रभु ।
विपश्चित्सुमतिर्वीर सर्वशास्त्रार्थतत्त्ववित् ।
वैर नेष्यति धर्मात्मा स्वजने नास्यतिक्रम ।
न विग्रहमति कृष्ण स्वजने प्रतिनन्दति ।
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ।
वासुदेवमते चैव पाण्डवस्य च धीमत ।
स्थास्यन्ति पुरुषव्याघ्रास्तयोर्वचनगौरवात् ।
रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
जीविते यत्नमातिष्ठ जीवन्भद्राणि पश्यति ।
राज्य श्रीश्चैव भद्रं ते जीवमाने तु कल्प्यते ।
मृतस्य खलु कौरव्य नैव राज्यं कुत सुखम् ।
लोकवृत्तमिदं वृत्त प्रवृत्तं पश्य भारत ।
शाम्य त्व पाण्डवै सार्धं रक्ष शेषं कुलस्य च ।
मा भूत्स काल कौरव्य यदाहमहितं वच ।
ब्रूयां कामं महाबाहो मावमस्था वचो मम ।
धर्मिष्ठं हितमत्यन्त राज्ञश्चैव कुलस्य च ।
एतद्धि परम श्रेय कुरुवंशस्य वृद्धये ।
प्रजाहित च गान्धारे कुलस्य च सुखावहम् ।
पथ्यमायतिसंयुक्तं कर्णो ह्यर्जुनमाहवे ।
न जेष्यति नरव्याघ्रमिति मे धीयते मति ।
रोचता ते नरश्रेष्ठ मम तद्वचन शुभम् ।
अतोऽन्यथा हि राजेन्द्र विनाश सुमहान्भवेत् ।

39

K4 B2 5 Dn1 D2 6 8 ins after 1079* V1 Da1 D1 5 after line 20 of App I (No 40) B1 after 8 66 4 T1 2 after 1080*

तौ सदधानावनिश स्म राज-
न्समस्यन्तौ चापि शराननेकान् ।
संदर्शयन्तौ युधि मार्गान्विचित्रा-
न्धनुर्धराणा प्रवरौ कृतास्त्रौ ।
तयोरेवं युध्यतोराजिमध्ये
सूतात्मजोऽभूदधिक कदाचित् ।
पार्थ कदाचित्त्वधिक किरीटी
वीर्यास्त्रसम्यग्बललाववैस्तु ।
दृष्ट्वा ततस्त युधि सप्रहार
परस्परस्यान्तरप्रेक्षिणो ये ।
घोर तदा दुर्विषह रणेऽन्यै-
र्योधा सर्वे विस्मयमभ्यगच्छन् ।
ततोऽथ भूतान्यन्तरिक्षे स्थितानि

38

(L. 2) T1 2 G2 कृपालुर् G2 [ऽ]थ (for हि) — (L. 4) M2-4 धीर (for वी°) — (L. 5) T1 M2-4 नेच्छति (for नेष्यति) — (L. 6) M धिग् (for न) G3 कृष्णे — (L 7) G2 सहोदरौ, M च सोदरौ (for च पाण्डवौ) — (L. 8) G2 °मतौ (for °मते) — (L. 11) G1 3 जीवने (for जीविते) T2 G1 2 M1 जनन् (for जीवन्) T2 G2 3 पश्यति — (L 12) T1 च श्रीश्च (for श्रीश्चैव) M1 जीवमानेषु (for °ने तु) G2 कल्पते — (L. 14) T1 वृत्त पश्य च (for प्रवृत्त पश्य) — (L 15) G2 साम्य (for शाम्य) M चेद् (for त्व) G2 3 transp रक्ष and शेष T2 बलस्य (for कुलस्य) — (L 16) T2 M1 यथा (for यन्) G2 तन् (for [अ]हम्) T1 यथा ह्यमित वच (for the post half) — (L 17) T2 ब्रूहि, G2 ब्रूयाद्, G2 ब्रूया , M ब्रूयात् (for ब्रूया) M कामान् (for काम) — (L. 18) T1 G2 3 इदम् (for हितम्) G अत्यर्थ (for अत्यन्त) M राज्ञा — (L 20) T2 M क्षत्रस्य च , G1 क्षत्रियस्य (for कुलस्य च) — (L 21) T1 वचमायाति संयुक्त , T2 G1 3 M1 पथ्यमायाति सयुक्त, G2 पदयेम याति स° G1 [ऽ]पि (for हि) — (L 22) G1 M1 नरव्याघ्र (for °व्याघ्रम्) G1 धिष्ठिते, G2 3 निश्चिता (for धीयते) — (L. 23) G2 राजता (for रोचता) M2-4 ममैतद् (for ममै°) — (L. 24) T1 ततो, M1 अथो (for अतो)

39

(L 1) D6 सौम दधानाव् (sic) (for तौ सदधानाव्) B5 Dn1 D6 च (for स) — (L 3) Dn1 संदर्शयेतौ, D2 °येता, D5 °यंति, T1.2 अ(T2 आ)दर्शयेता K4 V1 B2 Da1 D1 5 युद्धमार्गान्, D6 युद्धमर्गान्, D3 रणमार्गान् (for युधि मा°) — (L. 4) Dn1 T1 धनुर्धरौ तौ वि(T1 °वरास्त्रौ)विधै कृतास्त्रै ; T2 धनुर्धरौ तौ विविधान्कृतास्त्रौ — (L 5) Da1 D1 5 युध्यते वाजिमध्ये — (L. 6) Da1 D1 5 सुतात्मजे T2 अधिक — V1 B1 Da1 D1.5 om (hapl.) from कदाचिद् up to त्वधिक: in line 7 — (L 7) Dn1 पार्थ K1 D6 T1 2 अधिक , D3 ह्यधिक: D5 कदाचित् (for किरीटी) — (L 8) V1 B2 4 Da1 D3 वीर्यास्त्रसपद्बल(V1 °द्रुप)लाघवैस्तु (V1 °श्च), Dn1 °मायाबलपौरुषेण; D6 °शम्याबलत्वावेषु, T1.2 दिव्यास्त्रसाहो (T1 °नाम्ना) बलपौरुषेण — (L. 9) B5 तदस्त्र, Da1 D1 5 ततस्य, Dn1 तयोस्त, D2 तदस्त्रैर् (for ततस्त) — (L. 10) B2 [ऽ]पि (for ये) B1 Dn1 परस्परस्यान्तरमीक्षमाणयो°, B5 D1 8 °तर(B5 °रं)प्रेक्षि(D5 °क्ष-)णीये, D2 °तरप्रेक्षणीय, D6 °तरमेरणे ये — (L. 11) V1 योद्ध (for घोर) Dn1 T1 2 तयोर् (for तदा) T1 अविषह्य, T2 विषहिरे (sic) (for दुर्विषह) Dn1 T1 2 [ऽ]पे (for ऽन्यैर्) — Da1 D1.5 om line 12 — (L. 12) B5 तदा (for सर्वे) K4 D2 अ(D2 ना)भ्याच्छन् (for अभ्य°) — T1 om. from line 13 up to line 25 of App I (No. 40) — (L. 13) B2 4 5 T2 om., D2 [ऽ]पि-,

कर्णार्जुनौ तौ प्रशशंसुर्नरेन्द्र ।
भो. कर्ण साध्वर्जुन साधु चेति
दृष्टा प्रोचु· संघश प्रीतिमन्त ।

40

K4 B2.4 5 Dn1 D2 6 (om lines 13-25) 8 (om lines 17-25) T1 (om lines 1-25) 2 cont after App I (No 39) V1 B1 8 Da1 D1 5 6 7 Ca c ins after 8 66 4

तस्मिन्विमर्दे रथवाजिनागा
पदातिसघा वसुधा व्यकम्पयन्।
ततस्तु पातालतले शयानो
नागोऽश्वसेन. कृतवैरोऽर्जुनेन।
राजस्तदा खाण्डवदाहमुक्तो
कृत्वा सुवेग वसुधातलस्थ ।
अथोत्पपातोर्ध्वंगतिर्जवेन
सदृश्य कर्णार्जुनयोर्विमर्दम्।
अय हि कालोऽस्य दुरात्मनो वै
पार्थस्य वैरप्रतियातनाय।
सचिन्त्य तूण प्रविवेश चैव
कर्णस्य राजन्शररूपधारी।
ततोऽस्त्रसघातसमाकुल तदा
बभूव जाल विततांशुजालम्।
तत्कर्णपार्थौ शरसघवृष्टिभि-
र्निरन्तर चक्रतुरम्बर तदा।
तद्बाणजालैकमय महान्त
सर्वेऽत्रसन्कुरव सोमकाश्च।
नान्यत्किंचिद्ददृशु सपतद्दे
बाणान्धकारे तुमुलेऽतिमात्रम्।
ततस्तौ पुरुषव्याघ्रौ सर्वलोकधनुर्धरौ।
त्यक्तप्राणौ रणे वीरौ युद्धश्रममुपागतौ।
समुत्क्षेपैर्वीक्ष्यमाणौ सिक्तौ चन्दनवारिणा।
सतालव्यजनैर्दिव्यैर्दिविस्थैरप्सरोगणै ।
शक्रसूर्यकराब्जाभ्यां प्रमार्जितमुखावुभौ।

---

D6.8 हि (for स्य) K4 B2 4 T2 [अं]तरिक्ष — (L 14) Dn1 T2 तौ कर्णपार्थौ; D2 तौ कर्णार्जुनौ (by transp). T2 प्रहसन् (for प्रशशसुर्) D8 (before corr) वरेंद्र — (L. 15) T2 त्व (for भो ) Dn1 सार्जुन (for साध्वर्जुन) D2 भो कर्ण साधु भोर्जुन साध्वतिप्रहृष्टा, D8 भो कर्ण भोर्जुन साधु साध्विति — (L 16) D6 वाच (for दृष्टा·) Dn1 वियत्सु वाणी श्रूयते सर्वतोपि, D2 प्रोचु सघ प्रीतिमतो दि खस्था

40

T1 om lines 1-25 — (L 1) Dn1 विमर्दे B5 संघान्, Dn1 T2 नागेन्द्र; D6 8 संकुले (for नागा ) — (L 2) B5 D6 8 पदातिघाताद्वसुधा च(D6 प्र)कंपे, Dn1 T2 तदाभिघातैर्दलिते भूतले च, D2 यदाभिघाता******* — After line 2, T2 ins

प्रपतितहयनाग स्यन्दनाक्षिप्तचक्र
नृपवरशतकीर्णे पार्थमसङ्ख्ल च ।
शिनिवृषभमथैक प्राप्य वीरं च भीम
सविरथुतशशर्व (sic) श्वेतवाहस्य चास्ते ।

— (L. 3) T2 वसन्वै (for शयानो) — (L 4) T2 नाग श्वेत (for नागोऽश्वसेन ) K4 V1 B2-4 D (except Dn1 D2 6) महोरग कृतवैरोर्जुनस्य (B4 Da1 D1 5 °नेन) — (L 5) Da1 D1.5 6 तथा, D8 पुरा (for तदा). K4 V1 B Da1 D1. 5-5 7 -मध्ये (for -मुक्तो) — (L 6) B5 D2 6 8 युयोध कपाट्, T2 प्रबोधकोपो (for कृत्वा सुवेग) B1 2 D4 7 च (for सु-) Dn1 विवेश कोपाद्वसुधातल य — After line 6, T2 ins

स नागवीरोऽथ समुत्थितस्तदा
धरातलान्मातृवध च संस्मरन्।

— (L 7) K4 अथोपयादूर्ध्वगतिर्, B2 अतोपयातोर्ध्व°, Dn1 अथोर्धपातोर्ध्व°, D2 4 8 अथोपया( D4 °त्पपा)तोर्ध°, D6 अथोप घातोपगतो — (L 8) K4 V1 B1 3.4 Da1 D1.5-5 7 संचिंत्य (for संदृश्य) V1 Da1 Dn1 D1 5 विमर्दे, T2 विवाद — (L 9) D6 स, D8 च (for हि) D6 हि (for [ऽ]स्य) — (L 10) B1 T2 वै(T2 मी)रप्रतिघातनाय, Da1 D1 3.5 6 °पाद(D3.6 °त)नाय Ca cites प्रतियातन — (L. 11) Dn1 संधित्य K4 B1 3 D3 4 7 चैव, V1 सैव, B4 Da1 D1 5 वै(D5 वी)र, B5 D6 चैन, Dn1 T2 तूर्ण, D8 सर्व (for तूण) B1 प्रतिवेश (for प्रवि°) K4 B1-3 D5-7 तूर्ण; V1 B4 Da1 D1 3.4 5 तूण (for चैव) — After line 12, D8 reads lines 26-27 D8 om lines 13-25 — (L 13) D4 7 -संपात- (for संघात ) D2 -समावृतम् (for °कुल) D8 तत स्वय घातसमावृत तदा — (L 14) Bom ed बभूव जन्य B2 Da1 D1 5 विततास्त्रजाल D2 8 बभूव तत्तुमल सर्वतो वै Ca cites जाल (as above) — (L 15) B1.2 Dn1 D4 7 तत (for तत्) B2 पार्थकर्णौ V1 -संद्द-, D8 -संप्र- (for सघ-) — D8 om lines 17-25 — (L. 17) V1 B2 Da1 D1 5 ततो जाल बाणमय वियत्स्स — (L 18) K4 [ऽ]ग्रसन्, V1 B1-4 [अ]द्रावु , B5 चक्रु , Da1 D1 5 द्रष्टु (for ऽत्रसन्) — (L 19) V1 B5 Da1 D1 ददृशे (for ददृशु ) B5 स युद्धे (for संपतद्दे) — (L 20) V1 B2 Da1 D1 5 [ऽ]तिमात्रे, B1 °चित्रे — After line 20, V1 Da1 D1 5 ins App I (No 39) — (L 21) D2 तु (for तौ) — (L 22) K4 युद्धमानौ, V1 प्रेक्ष्यामो वै, B1 2 Da1 D1 5 प्रेक्ष्य(B1 °क्ष)माणौ, B8 D3.7 योक्ष्यमाणौ, B4 5 D4 योत्स्यमानौ, T2 त्यक्तवाणौ (for °प्राणौ) Da1 D1 युद्धश्रद्धाम्, T2 सम युद्धन् (for युद्धश्रमम्) B2 युद्धाय समुपस्थितौ (for the post half) — V1 B Da1 D1 5-5 7 om lines 23-27 — (L. 23) K4 Dn1 वीक्ष्यमाणौ T2 रक्तचदनधारिणौ (for the post. half) — (L 24) Dn1 सव्याल-; T2 तौ ताल- (for सताल ) — (L 25) T2 चद्र- (for शक्र-) K4 -मुखावुनौ;

